ता दृशो मयि वलयतादिति शम् । यस्मिन् क्षणे भगवदनुकम्पोपलब्धिस्तस्मिन्नेव क्षणे भक्ता महीपालानां कृते प्रणामाञ्जलिविरचनक्रियातो विरमन्तीत्यभिसन्धिः ।

**धर्मलुप्तोपमालङ्कारः ।** दरविकासीन्दीवरस्पर्धे नेति पदे दृशामुपमेयत्वमिन्दीवरस्य चोपमानत्वम् । स्पर्धनशब्दश्चोपमावाचकः शब्दः । साधारणधर्मश्च लुप्त इति धर्मलुप्तोपमालङ्कारः ।

**शार्दूलविक्रीडितं छन्दः ।**

( १० )

**कृष्णस्वान्तेति ।** साऽनुकम्पाऽऽकररूपिणी परं दैवतं श्रीराधा दयया स्वीयया नैसर्गिक्या कृपाधारया मे स्तुतिपरायणस्य मम लोचनगोचरोऽस्तु नयनविषयिणी भवतु । राधिकायाः साक्षात्कारं कामयमानः कविः श्रीराधास्वरूपस्य त्रिधोपस्थापनं विदधाति । तत्राद्यं रूपम्—कृष्णस्य यत्स्वान्तं हृदयं तदेव मदेभो मदसहितो गजः (मध्यमपदलोपी समासः) तस्य कीलने बन्धने महालानं महदालानं गजबन्धनरज्जुः श्रीराधा । द्वितीयं रूपम्-भासां तेजःपुञ्जानां निवासस्थली निवासस्थानम् । भासः कीदृश्य इति चेदाह-धर्षिता बलाद्भर्त्सिताः स्वशोभया न्यक्कृता ये वर्षुकाश्चामी अम्बुदाश्चेति कर्मधारयः, वर्षणोन्मुखा घनाघनास्तेषु लसन्त्यः प्रचकासत्यो या विद्युतां सौदामनीनां छटा विच्छित्तयस्ताभ्य उद्यन्त्यूर्ध्वं प्रसरन्ती रुक् कान्तिर्यासां ताः, तासां भासां निवासस्थली राधिकेति भावः । स्थलीत्यत्र स्थलशब्दात् "जानपदकुण्डगोणस्थलभाजनाग—" पा० ४।१।४२ इत्यादिसूत्रेणाकृत्रिमार्थे ङीष्प्रत्ययविधानात्स्थलीशब्देनाकृत्रिमा नैसर्गिकी भूमिर्गृह्यते । तृतीयं रूपम्-स्मेरः स्मितं विकिरन् योऽपाङ्गो नेत्रकोणभागस्तस्य या सुधा नयनाञ्चलपीयूषराशिस्तस्मादुत्थितो यो मदनस्ततः प्रादुर्भूतो यो मन्मथस्तेन कामदेवस्य पुनः प्रादुर्भावेनोन्नृत्यन्ती प्रोद्दामरूपेण नर्त्तनशीला या रतिस्तया प्रीणिता प्रहर्षिता राधा मम लोचनगोचरोऽस्तु चर्मचक्षुषोः सम्मुखे स्वात्मानमाविर्भावयतु ।

**अयम्भावः ।** भगवतया: श्रीराधिकायाः सप्रेम निरीक्षणं मञ्जुलमित्युत्प्रेक्षितमत्र कविना । यदा यदा राधिका समुच्छलितदिव्यानुरागशीतलाम्बुबिन्दुस्निग्धहृदयेन मन्दस्मितपरिमण्डितमुखारविन्देनावलोकयति, तदा तदा तत्तादृशेन सस्मितं निरीक्षणेन कन्दर्पः प्रादुर्भवति । चिरमदर्शनं गतस्य स्वकीयस्य प्रियतमस्य मदनस्य पुनर्दर्शनेन विकसितहृदयेन्दीवरपटला रतिः चिरप्रवासागतप्रियतमदर्शनप्रमोदसुधार्णवविहितब्रुडना प्रोषितभर्तृकेव, निदाघाम्बरमणिमयूख-

ग्रीष्मतापसंतप्तकलेवरा तिग्मरश्मिरश्मिजालपरितापविगलितहिमाम्भःशीतली-कृते भागीरथीवारिपूरे कृतस्नाना ललनेवाभूतपूर्वेण हर्षोद्गमेन नरीनृतीति । नरी-नृत्यमानां रतिं दर्शं दर्शं राधिका भृशं प्रमोदतेतराम् । श्लोकेऽस्मिन्कविर्ध्यानाव-स्थायां समाधौ वा राधिकाविग्रहदर्शनं नानुमनुते प्रत्युत प्रत्यक्षमेव साक्षाच्चिच-कीर्षतीत्यत्र नास्ति विचिकित्साकणिकाऽपि ।

**परम्परितरूपकालङ्कारः** । राधिकायां महालानत्वारोपे कर्त्तव्ये श्रीकृष्ण-स्वान्ते मदकरित्वारोपस्य कारणत्वात् ।

**शार्दूलविक्रीडितं छन्दः ।**

( ११ )

**श्रीराधाहेमकुम्भेति** । श्रीराधाया हेम्नः सुवर्णस्य कुम्भ इव यः स्तनस्त-स्य यो मणिः स्तनाग्रभागवर्त्ती शातकुम्भकुम्भखचितमणिरिवाग्रभागमणिस्तद्-हरणाय शनैः स्तेयायोद्यते स्तेने चौररूपके कृष्णहस्ते श्रीकृष्णकरे प्रवर्त्तिते सति । अपि च, ग्रीवाग्रदेशं ग्रीवायाः कण्ठस्याग्रदेशं मध्यवर्त्ति स्थलं स्पृशति सति । मन्मथो मकरध्वजः श्रीकृष्णविषयकः कामः सततं राधिकाशरीरे जागर्त्ति । तादृ-शेन रात्रिंदिवं जाग्रता मन्मथेन सपदि झटित्येव कङ्कणानां वलयानां निर्घोषैः रणरणात्मकैर्ध्वनिभिः (करणे तृतीया) । युगपत् तत्कालमेवोत्त्थापिता रोमाङ्कुराः समुद्भाविता रोमाङ्कुरराजय एव यामिकानां स्तोमा निशीथिनीरक्षकाणां समूहा नोऽस्माकं सर्वेषामिष्टसिद्धयै स्वाभिलषितकार्यजाताभ्युदयाय द्रुतं शीघ्रं सुर-वरतरवन्तु सुरवरतरवो मन्दारद्रुमा इवाचरन्तु । (आचारार्थे क्विप् ) ।

**अयमाशयः** । सार्वत्रिकः खल्वयं नियमो यत्सर्वेऽपि धनिनः स्वस्वधनैश्वर्य-संरक्षणाय कञ्चित्प्रहरिणं नियुञ्जते । भगवत्या राधिकायाः सविधेऽपि बहुमूल्यौ दिव्यसौन्दर्याकरौ शातकुम्भकुम्भकुचावास्ताम् । ययोरग्रेऽतीव मनोहरो मणिः खचितः । श्रीराधिका तद्रक्षणाय श्रीकृष्णविषयकमप्राकृतं मकरध्वजं न्ययुङ्क्त । यदा कश्चिच्चौरश्चौरकर्मणि प्रवर्त्तते तदा तस्य प्रवृत्तिर्मन्थरायते, यस्य कस्यापि जागरणागमनविषयकभयस्य विद्यमानत्वात् । एवमेवैकदा श्रीकृष्णोऽपि राधि-कायाः कनककलशस्तनाग्रभागखचितमणिहरणाय चौररूपं स्वकीयं करं प्रावर्त्त-यत् । यद्यप्ययं हस्तचौरः शनैः शनैः प्रवर्त्तते स्म तथापि हस्तस्पर्शसमकालमेव भगवत्या नियुक्तेन सततं हृदये जाग्रता मन्मथेन कङ्कणानां रणनसाहाय्येन सर्वेऽ-प्यन्ये रोमाङ्कुरात्मका रात्रिरक्षका द्रुतं जागरिताः । एवमुत्थापिता उच्चैराका-रिता अतएवोत्त्थिता राधिकारोमाङ्कुरा अस्माकं कृते कल्पवृक्षवद्वाञ्छितप्रदाः संपद्यन्तामित्यहो कमनीयकल्पनाशक्तेर्विलक्षणं प्रावीण्यं कवेः ।

**रूपकालङ्कारः**, रोमाङ्कुरेषु यामिकत्वारोपात् । **क्विब्लुप्तोपमालङ्कारश्च** । सुरवरतरवन्त्वित्यत्र सुरवरतरव इवाचरन्तु इत्यर्थे क्विप्प्रत्ययस्य लुप्तत्वात् । द्वयोः रूपकोपमयोर्मिथो निरपेक्षतया **संसृष्टिः** । कृष्णहस्तस्य च स्तेनरूपेणोत्प्रेक्षितत्वाद् **द्रव्योत्प्रेक्षा** । एतेन नितान्तं विलक्षणा काव्यचमत्कृतिः प्रादुर्भवति ।

**स्रग्धरा छन्दः** ।

( १२ )

**तव स्तुतिविधाविति** । हे राधिके । ते त्रिभुवनविश्रुतकीर्त्तयः स्वयशःप्रतापार्चिःप्रद्योतितदिगन्तराला हरिश्च विरिञ्चिश्च शर्वश्च हरिविरिञ्चिशर्वाः श्रीवत्सलाञ्छनकमलासनत्रिपुरान्तकास्त्रिमूर्त्तिप्रवरास्तव स्तुतिविधौ गलन् विसंष्ठुलतां गच्छन्नखर्वो महीयान् गर्वो दर्पाङ्कुरो येषां ते तादृशाः सन्तः सुरा वृन्दारका अपि तव ह्लादिनीशक्तिरूपायाः स्तुतिविधौ स्तवकर्मणि कथञ्चिदपि न क्षमाः प्रभविष्णवो न सम्पद्यन्ते । ननु यस्याः स्तुतौ ब्रह्मविष्णुमहेशसदृशानां निर्जरोत्तंसानामपि धीप्रयोगसामर्थ्याभावस्तर्हि मनुष्ययोनौ गृहीतजन्मनस्तव मनुष्यत्वात्सर्वथा स्तवशक्तिविरहितत्वात्कथं प्रवृत्तिरिति चेदाह-तथापि तव दृशोर्नयनयोरवलोक्यमाना सहजा जन्मन आरभ्य सम्बद्धा सखी दया ते स्तुतेः कलामंशमात्रं कलयितुं कर्त्तुं, वितनितुमिति यावत्, बलात् हठान्मां प्रवर्त्तयति नियुङ्क्ते ।

**अयम्भावः** । यदा प्रजापतिनारायणधूर्जटिप्रभृतयोऽमृतान्धसोऽपि भगवतीं राधां स्तोतुमीहन्ते तदा तेषां वाणी कुण्ठिता सती न प्रवर्त्तते । अथ च तेषां प्रज्ञाबलसमाश्रितो गर्वोऽपि सपद्येव विलीयते । ग्रन्थकारस्य प्रवृत्तिस्तु केवलं भगवत्या राधाया नयनकटाक्षसरण्या नैसर्गिकं मैत्र्यं भजमानामनुकम्पामाश्रयते । इयमेवानुकम्पा राधाचरणशरणाश्रितं कविं स्तुतिकलायै न तु समग्रायै स्तुत्यै प्रयोजयति । वस्तुतः राधास्तवनविधौ कविः स्वीयां लेखिनीं सर्वथा शक्तिशून्यामेव मनुते ।

**विरोधालङ्कारः** । यस्या राधायाः स्तुतौ ब्रह्मादयो देवा अपि न प्रभवन्ति, तदा त्वं मानवः कथं स्तोष्यसीति विरोधः । परिहारस्तु राधिकालोचनयोरजस्रं नृत्यन्ती साहजिकी सखी दया तत्स्तवनकर्मणि प्रभविष्णुं करोतीति हेतुना ज्ञेयः ।

**पृथ्वी छन्दः** ।

( १३ )

**पदोर्नाक्षिद्वन्द्वमिति** । हे राधे ! नास्ति धिषणा धीर्यस्य तत्तादृशं निर्बुद्धिमथापि ते स्तुतिविधावनन्ताचिन्त्यगुणगणायास्तव स्तवकर्मणि कृतमतिं कृत-

सङ्कल्पं मां जनो लोकः कस्मात्कस्मात्कारणादलं पर्याप्तं न हसतु । मम पदोश्चरणयोरक्षिद्वन्द्वं न, नास्ति नयनयुगली । नाहं न्यायशास्त्रप्रणेता गोतमो यो हि नामाक्षपादापरनामासीत् । गोतमस्त्वतीव कुशाग्रबुद्धिरासीन्न खलु मयि तत्तादृशी विलक्षणा मतिरिति यदि मादृशं मन्दमतिं त्वत्स्तवने प्रवृत्तमभिलक्ष्य संसार उपहसेत्तर्हि किमिव नामाश्चर्यास्पदं वस्तु । अक्षपादपदस्य व्युत्पत्तिस्तु-अक्षि लोचनं दर्शनसाधनत्वेन पादेऽस्येति रूपेण ज्ञेया । पूर्वमक्षपादस्तावत्स्वाभिमतप्रत्याख्यातुर्व्यासस्य मुखदर्शनं चक्षुषा निराकरिष्णुः पश्चाद्भगवता व्यासेन प्रसादितः स्वकीये पादे नेत्रं प्रकटय्य व्यासमद्राक्षीदिति सम्प्रदायः । ब्रह्मसूत्रेषु व्यासेन गोतममतं प्रत्याख्यातमित्यक्षपादस्य गोतमस्य व्यासं प्रति महीयानसद्ग्रहः सुप्रसिद्ध एव । अपि च, हे जननि ! ममाक्ष्णोर्लोचनयोः श्रुतियुगं कर्णयुगलमपि नास्ति । अक्षिभ्यां सर्पाः शृण्वन्ति, अक्षिभ्यामेवावलोकयन्तीति काकोदराणां 'चक्षुःश्रवा' इति नामधेयम् । पूर्वं खलु भगवान् शेषो धृतपतञ्जलविग्रहोऽशेषं व्याकरणशास्त्रं पिपाठयिषुस्तच्छास्त्रप्रचारैकधिया जगत्यामवततार । एवं पतञ्जलिः सर्पेन्द्रस्यानन्तस्यावताररूपेण समजनीति स्पष्टम् । अत्र कविश्चिकथयिषति यन्नाहं चक्षुःश्रवा मल्लोचनयोः श्रुतियुगलत्वाभावात् । नाहं पतञ्जलिरूपेणावतीर्णोऽनन्तः । तत्कथं मयि त्वत्स्तवनशक्तिः सन्निधत्ताम् ? अपि च, न मे जनुर्जन्म भूम्या वसुन्धरायाः श्रोत्रे श्रोत्रस्थानीय कर्णे ह्यभूदिति । अत्र भूमेः श्रोत्रं वल्मीकम् । वल्मीके च सच्छिद्रत्वेनोन्नतत्वेन च भूमेः श्रोत्रत्वारोपे गौणी साध्यवसाना लक्षणा । वल्मीकाद्वाल्मीकेरुत्पत्तिरिति शास्त्रप्रसिद्धम् । तेन च प्रस्तुते नाहमादिकविर्वाल्मीकिः । तद्वत्कविर्यः स्वीयया नवनवोन्मेषशालिन्या प्रतिभया तव स्तुतौ क्षमेत । हे राधे ! नापि मम सविधे आस्यानां मुखानां बहुता विद्यते । तत्तु षण्मुखकार्त्तिकेयस्य, पञ्चमुखेशानस्य, चतुर्मुखप्रजापतेर्वासुकेर्वा समीपे विराजते । मुखबाहुल्याच्चतुर्वेदधरश्चतुर्मुखो भगवान् वासुकिर्वा कथञ्चित्त्वद्गणितगुणगणान् गदितुं क्षमः स्यात् । गुणगणानामानन्त्यान्मुखानाञ्च वाहुल्यात्तत्कथमपि संभाव्यते । अहं त्वेकमुखो मानवत्वात् । तदेकेनास्येन त्वत्स्तुतिविषयकाणामनन्तानां गुणानामभिवर्णनं नूनमत्यन्तमेव कठिनो व्यापारः । अपि च, नास्ति मम दीर्घा नासा नासिका । नाहं गणेश इत्यर्थः । यद्वा, नाहं शुकदेवः । विविक्तदृष्टेर्यस्य नासिकातिदीर्घासीदिति श्रीमद्भागवतमहापुराणविश्रुतम् । श्रीशुकदेवस्य नासिका शुकचञ्चुदीर्घाऽऽसीत् । दीर्घनासात्वं तीक्ष्णबुद्धेर्लक्षणमिति सामुद्रिकशास्त्रेषु निरूपितम् । किन्तु हे राधे ! मम दीर्घनासिकत्वाभावात् शुकगणेशतीक्ष्णमतिशून्यत्वे त्वत्स्तुतौ सर्वथाऽसामर्थ्य-

मेवेति निश्चप्रचम् । अथापि तव स्तुतिविधौ कृतमतिमधिषणं निर्बुद्धि मां जनो यद्यलं हसति तर्हि हसतु नाम, नाहं जिह्रेमि ।

अयम्भावः । न्यायदर्शनकारगोतमस्य व्याकरणमहाभाष्यकारपतञ्जले-र्वाल्मीकिरामायणप्रणेतृवाल्मीकेरनेकमुखपरिशोभितस्य कुमारस्य, शङ्करस्य, चतु-र्वेदविद्याप्रवर्त्तकचतुर्मुखप्रजापतेर्वासुकेर्वा श्रीमद्भागवतमहापुराणासमज्ञातृशुकदे-वस्य गणपतेर्वाऽन्यतमत्वेऽपि राधिकास्तुतिप्रवर्त्तितशेमुषीकं मां प्रशंसेयुः केचन भगवद्भक्तिमुखरिताः कोविदाः एतेषामेकस्याप्यभावे मन्दमतौ मयि यदि जना मुहुरुपहसन्ति तदा सर्वथा नैसर्गिकमेवेति मे मतिः ।

अत्राधिषणमिति पदेन राधिकास्तवकर्त्तृणां पूज्यपादारविन्दानां निरति-शयं विनम्रभावो ध्वन्यते । न खलु सामान्येषु जनेष्वेतादृशो वाग्विभवो दरी-दृश्यते । स्वात्मानं मन्दमतित्वेनोपस्थापयतां तेषां पण्डितप्रवराणां विनम्रतयैवेय-मुक्तिरित्यहं मन्ये ।

**पर्यायालङ्कारः** पर्यायोक्त्या संवर्णनात् । साभिप्रायबहुविशेषणनिवेशनरूपः **परिकरालङ्कारश्च ।**

**शिखरिणी छन्दः ।**

( १४ )

**योग्यन्तःकरणेचरीति ।** मुररिपोर्मुरान्तकस्य श्रीकृष्णस्य प्राणादपि प्रेयसी प्राणाधिकप्रिया भगवती राधिका मम दृशोर्मार्गेऽक्ष्णोः पथि नेदीयसी भवतु । कीदृशीयं राधेत्युत्प्रेक्षते कविः । योगिनामन्तःकरणेषु चरतीति योगिहृदयसंचरण-शीला । अपि च, त्रयाणां जगतां य आपन्नास्त्रिविधतापप्रपीडिता आर्त्ताः प्राणि-नस्तेषां कृतेऽनुकम्पाया झरी कृपानिर्झरिणी । अथ च, समस्तानां जगतां चतुर्दश-भुवनानामेकान्ततो रक्षाकरी संरक्षयित्री । चेतसो मार्गाद् दवीयस्यतीव दूरे वर्त्तमानापि मुररिपोस्तन्नामकस्यासुरस्य विहन्तुः श्रीकृष्णस्य प्राणादपि जीविता-दपि प्रेयसी वल्लभा भगवती राधा । दवीयसीतिप्रयोगस्तु, दूरशब्दात् "द्विव-चनविभज्योपपदे तरबीयसुनौ" पा० ५,३,५७ इत्यनेनेयसुनि प्रत्यये कृते सति 'स्थूलदूरयुव' (पा० ६।४।१५६) इत्यादिना यणादिलोपे पूर्वस्य च गुणे ङीपि च सति सिद्ध्यति । प्रियशब्दस्य च प्रियशब्दादीयसुनि ङीपि च सति प्रेयसीति रूपम् । प्रियशब्दस्य च "प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृपदीर्घवृन्दारकाणाम्"—पा० ६।४।१४७ इत्यादिना प्रादेशः । अपि च, दिव्यं यदौदार्यं तेन गरीयसी श्रेष्ठा, सा हृदयाद्दवीयस्यपि राधिका नयनयोर्नेदीयसी समीपस्था भवतु ।

अत्र **वर्णानुप्रासस्यान्त्यानुप्रासस्य** च चमत्कृतिर्नितरां हृदयमाह्लादयति । **शार्दूलविक्रीडितं** छन्दः ।

( १५ )

**कान्त्येति** । कान्त्या पुञ्जीभूतया स्वीयया कलेवरसौन्दर्यशोभया विद्युतः सौदामन्या या परमा सुषमाऽलौकिकः सौन्दर्यराशिस्तस्या गर्वोऽभिमानस्तमाखर्वयन्त्यासमन्ताद्वामनतामापादयन्ती । अपि च, लीलागत्या लीलया विलासेन या गतिर्गमनं तया सविलासं चरणविन्यासात्मकेन व्यापारेण, मदेन गण्डस्थलयोर्निश्च्योतता मदवारिणा कलो रमणीयो मनोहरो यः करी हस्ती तस्य करिणः प्रक्रमं गतिविशेषं व्रीडयन्ती लज्जयन्ती नितान्तमवधीरयन्तीत्याशयः । अपि च, माद्यन्मदोन्मत्तं कुर्वत् प्रहर्षयद्वा यन्मन्दस्मितं मन्दहास्यं तस्य या रुचयः कान्तयस्तासां चयैर्निवहैर्दिगन्तान् दिवप्रान्तभागान् क्षालयन्ती प्रक्षालयन्ती । यदा भगवती राधा स्वकीयेनानन्दाकूपारे निमज्जयता मन्दस्मितेन दिक्षु स्वकीयां दृष्टिं प्रक्षिपति तदा तस्या दृष्टेः पुञ्जीभूतायाः कान्तितरङ्गिण्याः कल्लोलाः समन्तात्प्रसर्पन्ति । अथ चामी कल्लोला एतादृशीं प्रतीतिं प्रादुर्भावयन्ति यथा सर्वेऽपि दिक्कोणा नयनसरिन्नीरेण प्रक्षालिता भवेयुः । अनेन प्रक्षालनेन तेषु दिक्कोणेषु महीयानालोकः समुज्जृम्भते । अत्र राधिकाया दृष्टिरेव निदानमिति तात्पर्यम् । एतादृशी राधाऽपाङ्गैः स्वकीयैर्लोचनप्रान्तभागैर्निरवधिनिधिमपरिमितभाण्डारं नः सन्निधावस्माकं सविधे विधत्तां वितनुताम् । निरवधिकोऽपरिमितो यो निधिर्नैकविधसद्गुणाकरत्वमिति भावः ।

अत्र कविराशंसते यद्यदि भगवती राधिका केवलं सकृदपि मां कृपाकटाक्षमात्रेणावलोकयेत्तदाहमपरिमितकल्याणगुणगणनिधानपात्रं संपत्स्ये ।

**व्यतिरेकालङ्कारः** । राधायाः सुषमोपमेयभूता, विद्युत्सुषमा चोपमानभूता । उपमानभूतायाः सुषमाया अपेक्षया राधाविषयिणी सुषमा गरीयसीत्युपमानादुपमेयस्य गरीयस्त्वाद् व्यतिरेकालङ्कारः । तद्यथा काव्यप्रकाशे—'उपमानाद् यदन्यस्य व्यतिरेकः स एव सः' इति । मदकलकरिप्रक्रममित्यत्रापि व्यतिरेकालङ्कारः । यथाहि राधाया गतिप्रक्रम उपमेयभूतः, करिणः प्रक्रमश्चोपमानभूतः । उपमेयभूता राधागतिः उपमानभूतायाः करिगतेरतिरिच्यते ।

उभयत्र दण्डिमतानुसार**मुपमालङ्कारः** । यथाहि—'आखर्वयन्ती' 'व्रीडयन्ती' चेति द्वावपि शब्दौ दण्डिमतेन सादृश्यवाचकौ स्तः । राधायाः कान्तिः उपमेयभूता । विद्युच्छोभा चोपमानभूता । आखर्वयन्तीति सादृश्यप्रतिपादकः शब्दः । साधारणधर्मस्य च लोप इति **त्रिलुप्तोपमालङ्कारः** । एवमेव द्वितीय-

चरणेऽपि राधाया ललितगतिरुपमेयभूता। मदकलकरिप्रक्रममित्यत्र करिणो गतिविलास उपमानभूतः। व्रीडयन्तीति पदमुपमाप्रतिपादकः शब्दः। साधारण-धर्मश्च लुप्त इति **त्रिलुप्तोपमालङ्कारः**। आखर्वयन्ती व्रीडयन्तीतिपदद्वयघटका-खर्वव्रीडपदयोः सादृश्यवाचकत्वं तु स्फुटमनुमतं काव्यादर्शे।

> **"आक्रोशत्यवजानाति कदर्थयति निन्दति।**
> **विडम्बयति सन्धत्ते हसतीर्ष्यत्यसूयति।**
> **तस्य मुष्णाति सौभाग्यं तस्य कान्तिं विलुम्पति।**
> **तेन सार्धं विगृह्णाति**.................॥ काव्यादर्श २,६२-६३।

सर्वेऽप्येते सादृश्यवाचकाः शब्दा इति दण्डिमतम्।

अन्त्यानुप्रासस्य मधुरातिमधुरा झङ्कृतिरप्यत्रामृतोपमं नादसङ्गीतं कर्ण-योरासिञ्चतीति दिक्।

**मन्दाक्रान्ता छन्दः।**

( १६ )

**श्रीराधेऽखिलेति**। हे श्रीराधे! त्वमखिलानां समेषां योगिनां सम्यगभ्य-स्तयोगविद्यानां ये मानसान्येव हृदयान्येव करीन्द्रा वारणेन्द्रास्तेषां मानस-करीन्द्राणामालानयष्टिर्गजबन्धनस्तम्भभूता यष्टिर्वर्त्तसे। न केवलमेतावदेवापि त्वियं यष्टिर्दृढातीव सुदृढेत्यवधेयम्। ऋतम्भरया प्रज्ञया निर्विकल्पे समाधौ ध्याननेत्राभ्यां कृतात्मसाक्षात्काराणां योगिवर्याणामप्यन्तःकरणान्यत्यन्तं चञ्च-लानि भवन्ति। अतः साधकभक्तेन चित्तवृत्तिनिरोधः सदाऽवहितेन मनसा विधेयः। मनसो निग्रहः कविदृष्ट्या केवलं भगवत्या राधायाः कृपाकटाक्षेणैव संभाव्यते। अपि च, हे राधे! त्वमाशैव दुष्टपिशाचिका तस्या अपनयनेऽपाकरणे परा सर्वोत्कर्षेण विद्यमाना मन्त्रविद्याऽसि। यथा पिशाचिकाया निग्रहो मन्त्र-विद्यया बलात्कर्त्तुं शक्यते तथैवाशाया निराकृतिरपि राधानामोच्चारणमात्रेणैवो-पपद्यते। अपिच, अक्ष्णोर्नयनयोः कृते शीतांशुश्चन्द्रस्तस्य य उस्राः किरणास्तेभ्यो बहिर्निस्यन्दन् यः सुधाद्रवोऽमृतरसप्रवाहस्तेनार्द्रार्द्रीभूता या वटिका गुटिका तत्ता-दृशी श्रीराधा। हे राधे! नयनयोः कृते त्वं चन्द्रकिरणनिर्गच्छत्पीयूषद्रवक्लिन्ना वटिकाऽसि। हिमकणातिशायिशीतलातिशीतलहिमांशुमयूखसुधाद्रवेण नयनयोः शैत्यस्य पराकाष्ठां गतानुभूतिरत्राभिप्रेता। अपि च, स्वसेवाजुषामिति। स्वस्या-त्मनो राधिकायाः सेवायां जुषन्ते प्रमोदन्त इति स्वसेवाजुषस्तेषाम्। √जुषी प्रीतिसेवनयोरित्यस्मात्क्विपा साधु। स्वपदेन च राधिकाया ग्रहणम्। स्वसेवा-संप्रीतस्वान्तानां भक्तानामित्याशयः। आनन्दस्य य उदधिरानन्दार्णवस्तस्य

वीचिका तरङ्गरूपाऽसि । राधिकायामानन्दसागरतरङ्गत्वारोपेण रूपकालङ्कारः। किमधिकम्, त्वं हरेर्भगवतः श्रीकृष्णस्य सर्वस्वमेवाऽसि । मालारूपकालङ्कारः। एकस्यामुपमेयभूतायां राधिकायामालानयष्टित्वमन्त्रविद्यात्वाद्यारोपणेनानेकेषामुपमानानामारोपणात्, मालारूपकालङ्कारः काव्यप्रकाशकारदिशा । कुवलयानन्दकारदिशा त्वत्रोल्लेखालङ्कारो वोध्यः । एकस्या राधिकाया आलानयष्टिरूपेण मन्त्रविद्यारूपेण चन्द्रकिरणसुधाद्रवसंसिक्तवटिकारूपेणानन्दाम्भोधिवीचिरूपेण चोल्लेखादुल्लेखालङ्कारः। यथाहि कुवलयानन्दे–"एकेन वहुधोल्लेखेऽप्यसौ विषयभेदतः। गुरुर्वचस्यर्जुनोऽयं कीर्त्तौ भीष्मः शरासने"।। प्रथमचरणेऽश्लिष्टपरम्परितरूपकालङ्कारः। तद्यथा, राधायामालानयष्टिरूपत्वारोपस्तदैवोपपद्यते यदा योगीन्द्रमानसेषु करीन्द्ररूपत्वारोपः सम्पद्यते । यथा काव्यप्रकाशकारेणोक्तं परम्परितरूपकालङ्कारलक्षणम्—" नियतारोपणोपायः स्यादारोपः परस्य यः । तत्परम्परितम्······" ।। द्वितीयचरणेऽपि परम्परितरूपकालङ्कारः । राधिकायां मन्त्रविद्यात्वारोपस्तदैव संभाव्यते यदाऽऽशायां दुष्टपिशाचिकारूपत्वमारोप्यते ।

**शार्दूलविक्रीडितं छन्दः ।**

( १७ )

**कदा वृन्दारण्य इति ।** हे राधे ! तेऽतिरुचिरा नितान्तं मनोहारिण्यः, स्फुरन्त्याकस्मिकप्रकाशकिरणरेखाविलसन्ती या विद्युच्चपला तस्या भास इव भासः शोभा यासां दृष्टीनां ताः । अपि च, शुभश्चासौ विटपी द्रुमस्तस्य यः पूर्वाङ्कुरः प्रथमाङ्कुरस्तेन समास्तुल्याः । प्रतिपदं प्रतिचरणन्यासकाले स्तनयोर्य आभोगः परिपूर्णतां गतो विस्तरस्तस्य य उत्कर्ष औन्नत्यं तेनान्तरिता मध्ये मध्ये स्थगिता व्यवहिता या गतिर्गमनं तया रम्या अत्यन्तमेव हृद्याः । अपि च, वृन्दारण्ये वृन्दावनधाम्नि श्रितं विहरणं याभिस्ता विहितवहुविधविहारक्रीडाविभ्रमविलासास्ते दृष्टयो दृष्टिपाताः । निरवधिकः परां वृद्धिं गतो मोद आनन्द एवामृतरसो याभिस्ता ममाक्ष्णोर्मार्गे पतन्ति मल्लोचनगोचरमापतिष्यन्ति । पद्येऽस्मिन् केवलं विशेषणीभूतानां पदानां विद्यमानत्वाद्विशेष्यभूतस्य च पदस्याविद्यमानत्वाद् "दृष्टय" इति विशेष्यं पदमध्याहृतमास्ते । **अयमभिसन्धिः ।** कवेरत्र वलवत्तरः कोऽप्यभिलाषो जागर्त्ति वृषभानुनन्दिन्याः श्रीराधायाः कृपाकटाक्षपातमालोकयितुम् । कविः प्रार्थयते हे राधे ! न खलु मय्येतावान् सुकृतसञ्चयो यो हि मां त्वद्दृष्टिदर्शनकरणशक्तिजुष्टं सम्पादयेत्तथापि चङ्क्रम्यते मामकीनं चेतस्तव कृपाकटाक्षचन्द्रकिरणतरङ्गिण्यामवगाहितुम् । तव दृष्टिभिर्नूनं स्वैरं विहरणलीलाः समपादिषत । तासु रमणीयतायाः कोऽपि निधिः

प्रच्छन्नः। येनेदृङ् मनोहारित्वमुपापादि। धवलांशुकपटावृतात्कलानिर्वेनिगच्छज्ज्योतिःस्रोतसेव नेत्राभ्यामितस्ततो विकिरन् लावण्यपुञ्जोऽन्तःप्रच्छन्नं निधिं प्रत्याययति। इमाः स्फुरन्तीनां विद्युच्छटानां कान्तीः स्वकान्त्या न्यक्कुर्वन्ति। पुण्यमहीरुहस्य सर्वप्रथमं प्रादुर्भवदङ्कुरं तुलयन्ति। अपरिहार्योऽयं नियमो यद्वृक्षेषु प्रथममङ्कुराणां दर्शनं सञ्जायते। एवमेव राधिकाया दृष्टयोऽपि संवर्धयिष्यमाणस्य पुण्यवृक्षस्य पूर्वाङ्कुरसमाना विद्यन्ते। राधिकादृष्टिदर्शि साधकभक्तानां पुण्यद्रुमेऽङ्कुरोत्पत्तिरित्याशयः। राधिकाया गतिरपि मध्ये मध्ये मन्दा मन्दा भवति। किंवा, यदा कदाऽवरुध्यते। तत्र स्तनयोर्गुरुत्वमेव कारणम्। अनेन दृष्टिषु किमप्यपूर्वमेव रम्यत्वं प्रादुर्भवति। एतादृश्यो दृष्टयोऽपरिमितस्यानन्दस्य सुधाद्रवकणा इव कदा खलु मम नयनगोचरमागमिष्यन्तीति दिक्।

**अतिशयोक्तिरलङ्कारः**। तद्यथा—दृष्टिपदमुपमेयभूतम्। तच्च 'स्फुरद्विद्युद्भास' इत्यनेनोपमानभूतेन पदेन निगीर्णमास्ते। अतिशयोक्तेरलङ्कारशास्त्रप्रथितेषु चतुर्षु भेदेषु प्राथमिके भेदे विशेषणमुपमानं विशेष्यमुपमेयं निगिरति। यथा काव्यप्रकाशे—"निगीर्याध्यवसानं तु प्रकृतस्य परेण यत्।" प्रस्तुतेऽप्युपमेयभूतस्य विशेष्यस्य दृष्टिपदस्य नोपलब्धिरित्यतिशयोक्त्यलङ्कारः।

**शिखरिणी छन्दः।**

## ( १८ )

**पदं परमेति**। सा वृषभानुतनया भगवती राधिका वल्लवीनां गोपसीमन्तिनीनां पालिका पालयित्री जयति सर्वोत्कर्षेण वर्त्तते। या खलु परमाश्च ताः सम्पदः परमसम्पदस्तासां परमसम्पदां निखिलदिव्यैश्वर्यविलाससम्पत्तीनां पदमास्पदम्। अपि च, निखिलानि यानि मङ्गलानि तेषां निखिलमङ्गलानां सकलश्रेयोविग्रहाणां गृहं वासनिकेतनम्। अथ, मुदां प्रमोदप्रकर्षाणामुदयभूरुत्पत्तिस्थानम्। कलानां तत्तच्छास्त्रविनिर्दिष्टचतुःषष्टिसंख्याकानां कलानां यः समुदयो निचयस्तस्य दिव्याश्रयोऽलौकिकं शरणम्। अपि च, दयाया अनुकम्पाया जलनिधेर्महार्णवस्य स्थल्यकृत्रिमा भूमिः। इयं भगवती करुणावरुणालयस्य निवासार्थं निसर्गसौन्दर्यपरिमण्डितं स्थानमिवेत्याशयः। स्थलीत्यत्र तु स्थलशब्दात् "जानपदकुण्डगोणस्थलभाजनागकाल"—पा० ४।१।४२ इत्यनेन सूत्रेणाकृत्रिमेऽर्थे ङीष् प्रत्ययो विधीयते। तेनाकृत्रिमा चेत्स्थली, अन्यत्र स्थलेति विवेकः। अपि च, निखिलाश्च ये सद्गुणास्तेषामौदार्यादिलोकोत्तरस्वतःसिद्धगुणगणानां सदः समाश्रयभूमिः, हरेः श्रीकृष्णस्योरसि वक्षःस्थले मालिका पुष्पमालिकेव सा राधिका जयति शोभते।

**अयम्भावः**। यदि भगवती राधा स्वानुकम्पावशतया श्रीकृष्णस्योरः परिष्वजते तदावलोकयितृणामेतादृशी प्रतीतिः प्रादुर्भवति यथा भगवता मुकुन्देन त्रिभुवनसुमनःसौन्दर्यमुट् काचिन्मालाऽवधृता स्यान्नामेति। अत्र राधिकाया ऐश्वर्यस्य कल्याणस्यानन्दस्य कलाया अनुकम्पायाः सद्गुणानाञ्चाभूतपूर्वः समन्वयः समालोक्यते।

**मालारूपकालङ्कारः**। राधिकायां परमसम्पत्पदत्वस्य, निखिलमङ्गलगृहत्वस्य, कलासमुदायदिव्याश्रयत्वस्य, दयाजलनिधिस्थलत्वस्य निखिलसद्गुणसदस्त्वस्य चारोपणात्। एवमेकस्मिन् राधारूपक उपमेयेऽनेकेषामुपमानानामारोपान्मालारूपकालङ्कारः। अत्यन्तमेव मनोहारि पद्यं मे प्रतिभासते। प्रसादाख्यो गुणः श्लोकेऽस्मिन् पदे पदे नरीनृत्यते। कर्णप्रियो मधुरगीतध्वनिनिनादो नृत्यच्चेतः समावर्जयतीत्यहो ग्रन्थकर्त्तुः सभावगाम्भीर्यं विलक्षणा शब्दचयनचातुरी।

**पृथ्वी छन्दः**।

( १६ )

**कल्याणीति**। हे कल्याणि हे मङ्गलपरायणे! हे कृष्णवरवर्णिनि हे श्रीकृष्णप्रिये! कृष्णवरवर्णिनीशब्दस्य सम्बुद्ध्येकवचने प्रयोगः। "वरारोहा मत्तकाशिन्युत्तमा वरवर्णिनी" अमरकोषः २, ६, ४। अमरकोषस्य मणिप्रभाटीकानुसारं वरवर्णिनीति नाम गुणवत्या ललनायाः। सुधाव्याख्याकारेण तु वरवर्णिन्या एतल्लक्षणं प्रतिपादितम्—"शीते सुखोष्णसर्वाङ्गी ग्रीष्मे या सुखशीतला। भर्तृभक्ता च या नारी विज्ञेया वरवर्णिनी।" अगण्या असंख्याता य औदार्यादयोऽवर्ण्या अनिर्वचनीया गुणास्तेषां सन् शोभनो यो वरुणालयोऽम्भोनिधिस्तद्रूपायास्ते राधिकायाः, करुणाया अनुकम्पायास्तरणिं नौकामन्तरेण विना नोऽस्माकं त्वदेकशरणानां कृते जन्मादि जन्ममरणसम्बन्धि यद्दुःखम् (जन्मादिर्यस्य तत्) तद्रूपो यो जलधिः सागरस्तस्य तरणाय पारकरणाय लोकेऽस्मिन् जगतीतलेऽन्यत्किमस्ति? राधिकानुकम्पैकनौकातिरिक्तो नान्यः पन्था जन्ममरणादिदुःखाकूपारपारगमनायेति द्रढीयान् प्रत्ययः कवेः।

**अयम्भावः**। अत्र कवेः स्वकीया काऽपि विशिष्टा भावचमत्कृतेश्छटा परिकल्प्यते। एकतः सरसभावप्रचुरया कमनीयकल्पनातुलातुलितया सरण्या कविर्जन्ममरणादिदुःखपारावाररूपेण स्वकल्पनालोक एकं जलधिमुपनिबध्नाति। अपरतश्च, अनन्तौदार्यादिगुणपारावाररूपेण राधास्वरूपकं द्वितीयं जलधिं परिचिन्तयति। एवमत्र सागरद्वयमुत्प्रेक्षितमास्ते। एकेनौदार्याद्यनन्तगुणस्वरूपेण

राधिकासागरेण तदाश्रिते साधके करुणामसृणानि कृपानीरस्रोतांसि प्रक्षिप्येरन्, एतान्येव कृपानीरस्रोतांसि दुःखसागरसंतरणाय नौकारूपेण परिणमितानि संपद्येरन्निति भावः। सरसश्चित्ताकर्षकश्चायं भावविन्यासः। दुःखसागरतरणाय गुणसागरीभूताया राधिकाया दयास्वरूपिण्या नौकाया इवोपस्थापनमिति।

रूपकालङ्कारः। राधिकायां सद्गुणालयत्वारोपः, करुणायां तरङ्गित्वारोपः, जन्मादिदुःखे च जलधित्वारोपः।

वसन्ततिलका छन्दः।

( २० )

कलालीलेति। सा मुररिपोर्मुरस्य रिपोः शत्रोर्मुरासुरसूदनस्य श्रीकृष्णस्य प्रियसहचरी प्रियसखी श्रीराधा कदा कस्मिन्समये नः-राधिकास्तुतिबद्धचित्तवृत्तीनामस्माकमक्ष्णोर्मार्गं नयनयोः पन्थानं पुनाति पावयिष्यति? पुनातीत्यत्र "वर्त्तमानसमीप्ये वर्त्तमानवद्वा" पा० ३,३,१३१ इत्यनेन भविष्यत्काले द्योत्ये लड्लकारस्य प्रयोगः। ननु कीदृशीयं राधिकेति चेदाह—कलाश्च लीलाश्च कलालीलास्तासां मूलमाविर्भावनिमित्तम्। कलाशब्दश्चतुःषष्टिसंख्याकविविधकलापरः, लीलाशब्दश्च भावगभीरकेलिविलासपरः। यद्वा, कलामय्यो या लीलास्तासां ससौन्दर्यविलासानां चेष्टानां मूलं कन्दमिति। अपि च, व्रजस्य व्रजमण्डलस्य याः कुलवध्वः कुलाङ्गनास्तासां वाञ्छितफलं वहुतपःसमाचरणावाप्ताभीष्टोदर्कम्। कल्याणानां मङ्गलानां स्थली नैसर्गिकी निवासधरणिः। अथ, निगमो वेद एव लतिका वल्ली तस्या उत्तंसकलिका श्रेष्ठकलिका। एतादृश्याः कालिन्द्या मिहिरनन्दिन्या ललितं सुन्दरं यत्पुलिनं सैकतं तटं तस्मिन् केलिनिरता क्रीडापरायणा श्रीराधिका कदास्माकं लोचनपथं पावयिष्यतीति।

अयम्भावः। व्रजसुन्दरीणां भूयसीभिः तपःसाधनपरम्पराभिरधिगन्तव्याया वेदवल्लीमुकुलस्वरूपिण्याश्च राधिकाया उपस्थापनाद् आभीरकामिनीनिभतपःसाधनाभावे वेदादिशास्त्रपारावारपारकरणशक्तित्वाभावे च राधिकासाक्षात्कारः सुदूरमुत्सारित एवावतिष्ठते कविधिया।

मालारूपकालङ्कारः। राधायां कलालीलामूलत्वस्य व्रजकुलवधूवाञ्छितफलत्वस्य कल्याणस्थलीकत्वस्य निगमलतिकोत्तंसकलिकात्वस्य चारोपात्। एकस्मिन् राधात्मक उपमेयभूते विशेष्ये पदार्थेऽनेकेषामुपमानभूतानां विशेषणानामारोपणान्मालारूपकालङ्कारः।

शिखरिणी छन्दः।

( २१ )

**अमन्दानन्देति।** श्रीराधायाः पदाम्भोजद्वन्द्वं कदा खलु मम तिमिरवारं हरेदित्येतादृशीं प्रार्थनामुपकल्पयितुं पदाम्भोजद्वन्द्वं विशिनष्टि ग्रन्थकारः— अमन्द आनन्द एवोदधिः सागरस्तस्य पदमास्पदम्। यथा कस्मिंश्चिद्विपुलपयः-पूरे पारावारे नितरामुत्तुङ्गाः सलिलतरङ्गाः समन्तात्प्रसर्पन्ति तथैव प्रचुरप्रमोदार्णवरूपिणी राधाचरणयुगली। यस्यां हि सततमानन्दस्य महान्तः कल्लोलाः प्रवहन्ति। अपि च, अखिलाः सर्वाश्च याः कान्तयस्त्रिभुवनशोभास्तासामेकं सदनं, त्रिलोकाखिलच्छविनिकेतनमिति तात्पर्यम्। त्रिलोकस्य समस्ता विच्छित्तेश्छटा राधाचरणयोरेव स्वीयां शाश्वतीं स्थितिं श्रयन्ति। अथ, मृदु यथा स्यात्तथा शनैः शनैः सुकुमारतररीत्या कराभ्यां हस्ताभ्यां यः परामर्शः संस्पर्शस्तेन लुलितं तरलितं प्रकम्पितं वेत्याशयः। यदा भक्तो राधाङ्घ्रिसरोजयोः प्रणमति तदा प्रणमनकाले स्वकलेवरनतिपूर्वकमतीव कोमलभावेन तस्याः पादौ स्प्रष्टुं शनैरुत्सहते। न खलु स्वकठोरकरस्पर्शेन सुकुमारतमचरणयोः पीडा प्रादुःस्यान्नामेति-धिया। एवं राधिकाचरणारविन्दयोः प्रणमन् कविः प्रार्थयते हे राधे! त्वमेव मम शरणम्। अहं तव शर्मदं चरणं शरणं करवाणि। अधुना साष्टाङ्गप्रणिपातपूर्वकमधिगतचरणस्पर्शेन मया त्वच्चरणारविन्दे इतस्ततः सञ्चाल्येते। अत्रायं ममाभिलाषः-लोकेऽपि यदा कश्चित्प्रगाढनिद्रया स्वपिति तदा तं प्रबोधयितुं तस्य वपुः शनैः शनैर्लुलितं विधीयते। यदि कोऽपि जागरितुं दण्डाघातपूर्वकं प्रवर्त्तेत तदा सुप्तोऽपि जनो नूनं स्वनिद्राभङ्गोद्भूतकोपाग्निदग्धकायः सन् भृशं कुप्येत्। अत्र कविरनुमिनोति यत् कदाचिद्राधिकापि शयाना स्यात्। नो चेत् कथङ्कारं मय्येतावद्दुष्कृताज्ञानराशिः पुञ्जीभूतोऽभविष्यत्। राधिकायाः करुणार्द्रनिरीक्षणसमकालमेव सर्वविधाज्ञानध्वंसे नास्ति स्तोकोऽपि विचिकित्साकणः कवेः प्रत्ययेन। अतएवेयमभ्यर्थना-यदधुनापि यदि त्वं शेषेऽशेषे मद्दुरिताज्ञानसञ्चयेऽकृतापनोदनमतिरेव, तदाहं त्वच्चरणयोर्निपत्य बलाल्लुलितं सम्पादयामीति क्षम्यतां गरीयः खल्वेतदागो मदीयम्। एतादृशं राधिकायाश्चरणाम्भोजद्वन्द्वं स्वस्य चरणाम्भोजद्वन्द्वस्य ये नखाः पादरुहास्तेषां या रुचिः कान्तिस्तस्या या धारा प्रवाहस्तस्य समुदयैः समूहैः, मम राधाचरणयुगलचिन्तनरतस्य तिमिरवारं तिमिरस्य मोहान्धकारस्य वारमावरणं हरेन्निराकुर्यात्। अयं तिमिरवारः कविनात्र विलक्षणया रीत्या समुत्प्रेक्षितः। तद्यथा—अपारमनन्तं यदंहः पापमविद्याज्ञानञ्च ते एवान्तरे परिधाने स्तो यस्य तत्तादृशम्। कविकल्पनाजगति रजःप्रसरोद्भूतमोहान्धकारो वस्त्रद्वयं परिधत्ते। एकं पापवस्त्रम्। अपरमज्ञानवस्त्रम्। द्वयोरपि वस्त्रयोरन्धकारप्रतिनिधिरूपत्वात्तत्समावृते

मोहान्धकारपुञ्जे प्रगाढोऽन्धकारातिशयो ध्वनितो भवति । ईदृगन्धकारापकरणे तु केवलं राधिकायाश्चरणकमलनखाग्रभागान्निःसरन्ती धाराप्रवाहेण प्रवहन्ती कान्तीनामालोकमयी मन्दाकिन्येव क्षमते ।

अदन्तस्यान्तरशब्दस्य परिधानरूपेऽर्थे प्रयोगः । "अन्तरमवकाशावधि-परिधानान्तर्धिभेदताक्ष्ये । छिद्रात्मीयविनाबहिरवसरमध्येऽन्तरात्मनि च" अमरकोषः ३,३,१८८ । एवमन्तरशब्दस्य परिधानरूपकेणार्थेन कविकल्पनावधूः स्वकीयमवगुण्ठनमुद्घाट्यानिर्वचनीयाया भावप्रवणतैकप्राणाया निगडीकृतसौन्दर्य-चमत्कृतेर्दर्शनं चिकारयिषति । मोहमयः खल्वन्धकारः सर्वदा पापाज्ञानाभ्यां परिहितो भवतीति विदितमेव वेदान्ताकूपारपारदृश्वनां पण्डितोत्तंसानाम् । अंहोऽविद्ये तावदस्य मोहमयस्यान्धकारचयस्य वस्त्रोपवस्त्रे स्तः । एवं रमणीयार्थ-प्रतिपादकशब्दगरिमाणं साधु विजानत्कविहृदयं स्वपापाज्ञानपिहितस्य मोहान्ध-कारस्य समूलमुन्मूलनाय राधिकायाश्चरणयुगलीं प्रार्थयते । आवरणार्थको वारशब्दस्तु √ वृञ् वरण इत्यस्माद्धातोर्घञन्तः साधुः ।

**रूपकालङ्कारः ।** राधायाः पदाम्भोजद्वन्द्वेऽमन्दानन्दाब्धिपदत्वस्या-खिलकान्त्येकसदनत्वस्य चारोपणात् ।

**शिखरिणी छन्दः ।**

( २२ )

**पादाम्भोजयुग इति ।** हे हरिप्राणे मातः ! हे हरिवल्लभे श्रीकृष्णजी-विते ! तव पादावम्भोजे इव तयोर्युगं तस्मिन् चरणकमलयुगले सकृदेकवारमपि प्रणमतां सर्वेभ्यः सांसारिकेभ्यः पदार्थेभ्यः प्रत्याहृतेन्द्रियग्रामाणां साष्टाङ्गप्रणति-पराणां भागवतानां कृते, तव कृपावीक्षणं सानुकम्पं निरीक्षणं प्रतापं तेजः पक्ष्म-लयति विशालयति विस्तारयति वेत्यर्थः । अपि च, ततस्तदनन्तरं घूर्णमाना इतस्ततः सदर्पगति सञ्चलन्तो ये मत्तगजेन्द्राः क्षरन्मदाम्भःप्रक्लिन्नविशाल गण्डस्थला अतएव मदोद्धताः कुञ्जरेन्द्राः सैन्धवाश्च सिन्धुदेशोद्भवाः श्रेष्ठास्तु-रङ्गमास्तेषां या घटा करिणां तुरगाणाञ्च मन्दरमन्थनक्षुब्धाब्धेरूर्मय इव संघातीभूता संघटना तया घटया या गम्भीरा गेहश्रीर्वेश्मसम्बन्धिनी शोभा तां पक्ष्मलयति । यदा कश्चिद्भक्तो राधाया अङ्घ्रिपाथोजयोः प्रणमति तदैताव-दूर्जः प्रादुर्भवति यत्तस्य प्रभूतैश्वर्यनिदर्शनीभूता भूयांसः क्षीबा वारणा वाजि-नश्चान्योन्यं विजिगीषवो मदजलसिक्तकुम्भा मलयजद्रवलिप्तकामिनीकुचकुम्भ-मण्डलमुपहसन्त इव परिभ्रमन्तोऽपि गृहैश्वर्यशोभां परिवर्धयन्ति । न केवलमेता-वदेवापि तु संसत्सु विद्वन्मण्डलीषु प्रखरां मतिं कुशाग्रतीक्ष्णां बुद्धिं पक्ष्मलयति ।

अपि च, मधुनो झरीरूपां माध्वीकनिस्यन्दिनीरूपिणीं गिरं वाणीं पक्ष्मलयति। अन्ततस्तामनिर्वचनीयां लक्ष्मीं सम्पत्तिमपि भृशं पुष्णाति।

**अयम्भावः।** द्रढीयान् खल्वयं प्रत्ययः कवेर्यदेकवारमपि राधाचरणपङ्के-रुहयोः प्रणतिः पञ्चधा फलति। बलवदूर्जोरू.ण, गजाश्वमण्डितवेश्मश्रीरूपेण, विद्वन्मण्डलमूकतापादनचातुरीचतुरप्रज्ञारूपेण, मधुनिस्यन्दिस्रोतस्विवाग्रूपेण, लक्ष्मीरूपेण च। एतेषां पञ्चानां फलानां करुणामसृणाः कटाक्षपाता एवाश्रयः।

**तुल्ययोगितालङ्कारः।** राधानमस्करणेन प्राप्यमाणानां प्रतापगेहश्री-प्रभृतीनां प्रस्तुतानां पदार्थानां पक्ष्मलत्वरूपेणैकधर्मेण सहाभिसम्बन्धात्। नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता" इति काव्यप्रकाशकारोक्तलक्षणात्।

**शार्दूलविक्रीडितं छन्दः।**

( २३ )

**प्रोन्मीलन्निति।** मुररिपोर्मुरारिश्रीकृष्णस्य केऽप्यनिर्वचनीया मनोरथा मनःसङ्कल्पा मूर्त्ता राधिकारूपेण धृतविग्रहाः सन्तो वृन्दावने गोलोकापरनाम्नि धाम्नि दीव्यन्ति। नन्वशरीरिणां मनोरथानाममूर्ताव्यक्तरूपतया चक्षुर्ग्राह्यस्थूला-कारत्वाभावेऽपि मूर्त्तशब्देनोपस्थापनमसङ्गतमिति चेन्न, लावण्यचरमसीमाया राधिकायाः स्वरूपेण विग्रहवत्सु मुरान्तकश्रीकृष्णमनोरथेषु सर्वातिशायिन्या अलौ-किक्याः शक्तेः समुज्जृम्भणात्। भगवतः सङ्कल्पमात्रेणैव निराकाराः पदार्था साकाराः सम्पद्यन्ते, अमूर्त्ता मूर्त्ता भवन्ति, जडवस्तूनि च चेतनसौन्दर्यनिधिनिधानपेटिकान्येवा-भिलक्ष्यन्ते। एवमेकतः कमनीयया कल्पनया श्रीकृष्णस्य स्वरूपशक्तिसङ्केतः, अपर-तश्च माधवमनोरथरूपेण परिणतायाः राधिकायाः सौन्दर्यशेवध्युन्मीलनमित्यहो नूनमनन्वय एवायं कविकल्पनाचमत्कारः। एतादृशानां राधिकाकारपरिणतानां श्रीकृष्णमनोरथानामिह त्रिधोपस्थापनम्। यथाहि प्रकर्षेणोन्मीलन्ति यानि शत-पत्राणि विकसितविकसितानि पङ्केरुहाणि तेषां या दिव्या सुषमाऽलौकिकी कान्तिस्तस्या आदाने ग्रहणेऽतीव दक्षाणि पद्मनीक्षणान्यवलोकितानि येषाँ ते तत्तादृशा मनोरथाः।.एतेषां मनोरथानां लोचनसरस्यां विकसन्नलिनदलाद्भुत-शोभामुट्चातुरी निरन्तरं निवसति। अपि च, सन्ति शोभनानि यानि मुक्ता-फलानि सोदरं सहोदरं यत्स्मितं स्मेरं तस्य रुचा कान्त्या प्रकर्षेण द्योतितमालो-कितमाशानां हरितामन्तरं मध्यभागो येषां ते तथाविधा मनोरथाः। मञ्जुल-मौक्तिकोपमानुपमहास्यप्रभोद्भासितनिखिलदिगन्तराला इत्याशयः। अत्र बृहदा-कारमौक्तिकानां त्विड्भिः राधिकाया मन्दहास्यस्य कान्तिरूपमीयते। स्मितं मुक्ता-

फलं सोदरत्वेनोपस्थापितम् । मौक्तिकस्मितयोः सहोदरत्वात्तुल्यधर्मत्वारोपः । स्मितञ्च सर्वदा धवलातिधवलमिति कविसम्प्रदायः । द्वयोः समानधर्मत्वाद्धवलत्वसाधर्म्याच्चोपमानोपमेयभावेन निरूपणम् । यथा यदा कस्मिंश्चिद् बृहन्मुक्तामणौ प्रकाशमयूखाः पतन्ति तदा श्वेतमुक्तामणिः स्वकान्तिप्रसरधवलिम्नाधिकाधिकं विद्योतते, तथैव यदा भगवती राधा मन्दं मन्दं हसति तदा तस्मात्प्रस्फुटतो हास्यात् कराङ्गुलिविप्रकीर्णकुसुमपुञ्जप्रभूतप्रभूतगन्धेन याः कान्तयः समन्तात्प्रसर्पन्ति ताभिः सर्वासां दिशामापूर्यमाणा मध्यभागा आलोक्यन्ते । यद्यत्रान्तरशब्देन दिग्मध्यवर्त्तिनां राधिकाचरणाश्रितानां भक्तानां ग्रहणं क्रियेत चेत्तदा स्मितालोकेन भक्तजनहृदयान्तर्वर्त्तिप्रगाढमोहान्धकारविध्वंसनेनैवाभिप्रायः । अपि च, गात्रच्छवीनां वपुस्त्विषां चयैः समुदायैस्तप्तं यत्स्वर्णं महारजतं तस्य रुचिः प्रभा तस्याः प्रपञ्चनेन वित्ता विस्तरणेन कुशला इति—प्रपञ्चनचणाः । राधिका प्रतप्तकार्त्तस्वरतुल्यद्युतिरासीत् । यदा तस्याः कलेवरात्सानुमच्छिखरनिपतितसहस्रधारा निर्झरा इव, मुकुरतलप्रतिबिम्बितसहस्ररश्मेः प्रस्फुटितानन्तकिरणा इव रुचिररुचिरश्मयःप्रादुःषन्ति तदैवं प्रत्याययन्ति यथा स्वदेहकान्तिजितजातरूपकान्तिः सा राधा नाडिन्धमज्वलनार्चिःप्रतप्यमानहाटककान्तिप्रसारणेऽत्यन्तमेव कुशलिनीति । एतादृशाः श्रीकृष्णस्य राधिकारूपा मनोरथा वृन्दावने दीव्यन्ति । 'तप्तस्वर्णरुचिप्रपञ्चनचणा' इत्यत्र "तेन वित्तश्चुञ्चुप्-चणपौ" पा० ५, २, २६ इत्यनेन तप्तस्वर्णरुचिप्रपञ्चनेन वित्तेत्यर्थे चणप् प्रत्ययो विधीयते ।

**रूपकातिशयोक्तिरलङ्कारः** । तद्यथा, प्रस्तुतं राधारूपं विषयमुपमेयं निगीर्याप्रस्तुतो मनोरथरूपो विषयी (उपमानम्) समुपस्थापितः । राधिकाया मनोरथरूपेण रूपणं सञ्जातमिति रूपकातिशयोक्तिरलङ्कारः ।

**शार्दूलविक्रीडितं छन्दः** ।

( २४ )

**शश्वत्प्रोद्यदिति** । अत्र भक्तकविः श्रीप्रियामुखचन्द्रकिरणजालैः स्वान्तःस्थमोहान्धकारनिराचिकीर्षुरुपतिष्ठते हे राधिके ! भवस्य संसारस्योत्तापानां त्रिविधतापानां क्लान्तीनाञ्चापनोदनेन दूरीकरणेन जगतां जगन्निवासिनां जनानामाह्लादकः परप्रमोदहेतुः शश्वन्निरन्तरं प्रोद्यन् प्रकर्षेणाविर्भवन् योऽनुग्रहोऽनुक्रोशस्तेनामलो यः शरद्राकासुधांशुः शरदो या राका पूर्णिमा तस्याः सुधांशुश्चन्द्रमा मे तिमिराकूपारमज्ञानमहासागरमपहरतु । अत्र कविना चन्द्रद्वयं परिकल्पितम् । एको हि लोकप्रसिद्धश्चन्द्रः । अयं तु केवलं ललाटन्तपतपनतापतापिततनूनां नृणां दैहिकं तापं दैहिकीञ्च परिक्लान्तिं सुधास्राविण्या स्वीयया शीतलातिशी-

तलया ज्योत्स्नया निराकर्त्तुमलम् । अपरस्तावद्राधामुखचन्द्रः । अस्मादजस्रमनुग्रहः प्रवहति । अनुग्रहः शुक्लो भवतीति कविसमयः । राधिकामुखचन्द्रान्निरन्तरं प्रसर्पच्चन्द्रिकाकिरणजालमिवानुग्रहधाराश्च्यवन्ति । येन सर्वदैव तन्मुखं शरत्पूर्णिमाचन्द्र इवोपस्थापितम् । अयं वदनसुधांशुः सांसारिकं त्रिविधितापं, सांसारिकीं शोकमोहादिजन्यां परिक्लान्तिञ्च समूलमुन्मूलयितुं प्रभविष्णुः । न खलु लौकिके सुप्रसिद्धे चन्द्रमसि तत्रादृशी शक्तिः । सांसारिकोत्तापहरणशीलत्वादेवायं जगतामाह्लादकः । सोऽयं सर्वप्रसिद्धश्चन्द्रमाः सर्वतः प्रसृमरैः प्रसरणशीलैः, स्वीया य उस्राः किरणास्तैः स्वकीयैर्मयूखैर्यथा जगदाह्लादकस्तथैव राधिकावदनसुधाकरोऽपि सर्वतः प्रसृमरैः प्रसरणशीलैस्तव मन्दहासस्य मन्दस्मितस्य प्रभापूरैः कान्तिप्रवाहैर्मे ममान्तःस्थितं हृदयान्तर्वर्त्तिनमपारं यत्तिमिरं मोहान्धकारस्तस्य योऽकूपारः पारावारस्तमपहरतु दूरीकरोतु । वस्तुतो यदा वृषभानुनन्दिनी भगवती राधा प्रसीदतितमाम्, तदा तस्याः शारदसुधाकरसमुज्ज्वलस्य वदनसुधाकरस्य मन्दस्मितव्याजोच्छलन्मयूखैर्भक्तिभरभरितचित्तं भक्तं प्रत्यनुग्रहातिशयः प्रवर्षति । कृतानुग्रहा भगवती यदि मन्दं मन्दं हसितुमारभेत, तदा तस्माद्धास्यात् सर्वतः प्रसरणशीलाः प्रभापूरा मम राधास्तवनरतस्यानन्तापरिमितमोहान्धकारं विनाशयेयुः । 'प्रसृमर' इत्यत्र प्रपूर्वकात् √सृधातोस्ताच्छील्ये "सृघस्यदः क्मरच्" पा० ३, २, १६० इत्यनेन क्मरच् प्रत्ययो बोध्यः ।

**व्यतिरेकालङ्कारः** । लौकिकचन्द्रादपेक्षया राधिकावदनचन्द्रस्य समुत्कर्षप्रतिपादनात् । रूपकातिशयोक्तिरलङ्कारश्च । यथाहि, 'राकासुधांशु' रित्यस्योपमानभूतस्य विषयिण उपादानम्, राधिकामुखस्योपमेयभूतस्य विषयस्योपादानं न कृतमिति रूपकातिशयोक्तिरलङ्कारः ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७५ )

**कृपामिति** । हे राधे ! पापस्य दुरिताचरणस्यारम्भेणोग्दतो यो बहुलस्तापस्तेनाकुला धीर्येषां तेषां नृणां जनानां कृते प्रपाकल्पां पानीयशालासदृशीं तव कृपामनुकम्पां वयमुपासीमहि । यथा कश्चिदहिमरुचिखरकरनिकरघर्मदग्धदेहः श्रमसलिलकणालङ्कृतास्यबिम्बस्तापक्लान्त्यपनुनोदयिषुर्मलयजवनवीथिकाशिशिरजलपूर्णैः कलशैरुपशोभितैकदेशां पानीयशालां सस्पृहं निरीक्षमाणो दूरादेव पिबन्निव चक्षुषा भृशं प्रमोदतेतराम्, तथैव दुराचारोद्भूतप्रखरतापतापितकलेवराः प्राणिनो राधिकाया अनुकम्पां शरत्पूर्णिमासुधाकरकिरणशीतलां पानीयशालामिवानुमन्वते । एतादृशीमनुकम्पां त्वदेकशरणा वयमपि सततं भजामहे ।

अपि च, हे अकम्पाशम्पाभे ! अकम्पा निश्चला या शम्पा चञ्चला तस्या आभेवाभा यस्याः सा तत्सम्बुद्धौ । हे राधे ! अकल्पानामसमर्थानां तनुभृतां शरीरधारिणां जनानां त्वमविकल्पा निर्भ्रान्तिस्वरूपिणी सुगतिः शोभना गतिर्विद्यसे । अथ, तेऽनुकम्पैव कृपाकटाक्षपात एव तेषां कृते जगति शरणम् । जगत्यां खलु तव कृपैवाश्रयत्वेन संरक्षिकेति भावः । अत्रेदमवधेयं यल्लोके सर्वतः सुप्रसिद्धा सौदामनी सततं सकम्पा भवति । निमेषपातपरिमितकालमात्रं स्वकीयां प्रकाशकिरणरेखां प्रदर्श्य विलयमुपगच्छति । एतदेव सकम्पत्वं शम्पायास्तत्र चिरन्तनत्वाभावात् । किन्तु लोकोत्तरप्रकाशतेजःपुञ्जीभूतायां राधिकायां या विद्युत्प्रभारुचिः सततं स्थितिं भजते, सा नूनमकम्पेति भगवत्यास्ततः समुत्कर्षः । इयं हि राधिकाकलेवरतडित्कान्तिर्निमेषमात्रमपि तां न परिजहातीति विशेषः ।

**प्रेयोऽलङ्कारः** । "तवानुकम्पा शरणमिति" पदेन राधाविषयको रतिभावो ध्वन्यते । तस्य च शान्तरसस्याङ्गीभूतत्वात् पद्येऽस्मिन् प्रेयोऽलङ्कारः ।

**शिखरिणी छन्दः** ।

( २६ )

अस्माच्छ्लोकादारभ्य वृषभानुनन्दिन्या नयनयुगलीं संवर्णयन् कविर्यादृश्या भावभङ्ग्या यादृशं महिमानं प्रकटयति सोयं महिमा नूनं सहृदयहृदयावर्जकः ।

**अज्ञाः सन्ततेति** । अज्ञा अनाघ्रातनिगमागमपुराणादिशास्त्रकुसुमगन्धलेशाः सर्वथा जडप्रकृतयोऽपि मूर्खाः, सन्ततमजस्रं दुर्गता दरिद्रा निजजनैः स्वकीयैः पुत्रकलत्रप्रभृतिभिर्बन्धुभिरप्युज्झिताः परित्यक्ताः, अथ चोपेक्षिता उपेक्षाभाजनतां नीता मर्त्या मरणधर्माणः साधारणा जनास्ते तव कारुणिकेक्षणं करुणापरिपूर्णमीक्षणं निरीक्षणं क्षणमपि प्राप्य मुहूर्त्तमपि लब्ध्वा वाण्यां वाग्विन्यासेऽद्भुतमाधुरीरसझरीमद्भुताऽनिर्वचनीया या माधुरी मधुरिम्णः प्रकर्षस्तस्या यो रसो द्रवस्तस्य झरीं निरन्तरं प्रसवन्निर्झरिणीं प्रकटयन्ति । अपि च, त्वदनुकम्पाकटाक्षपातावगणितत्रिभुवनसम्पत्समुत्कर्षा ह्येते पुरन्दरस्येमा इति पौरन्दर्यस्ताश्च ताः सम्पद इति पौरन्दरीसम्पदस्तासां सहस्राक्षसम्पत्तीनां सन्दोहेषु निकुरम्बेष्वपि तिरस्क्रियां स्वकीयामवधीरणां प्रकटयन्ति । अपि च, अङ्गेषु स्वगात्रावयवेष्वनङ्गस्य मकरध्वजस्य श्रियं शोभां प्रकटयन्ति ।

**अयम्भावः** । अस्मिन् संसारे गृहमेधिनां कृते दोषद्वयं परिचिन्त्यते सार्वत्रिक्या धिया । प्रथमस्तावज्जडत्वनामा । द्वितीयश्च दारिद्र्यनामा । द्वयोरन्यतराधिष्ठितोऽपि जनः साधिक्षेपं तिरस्क्रियते । दोषद्वयसत्त्वे तु का कथा तिरस्क्रियायाः । यथाहि, ये खलु सर्वथापरिशीलितशास्त्रमर्मरहस्याः सांसारिक-

विविधव्यवहारज्ञानविरहिता निरन्तरं दरिद्रतारमणीसमालिङ्गितदेहा गृहस्थ-जीवनयापनायाप्यनुपार्जितपर्याप्तधना निर्धनास्ते प्रियतमया भार्यया प्राणाधिकप्रियैः पुत्रैरपि सनासाभ्रूसङ्कोचमवधीर्यन्ते । न खलु कोऽप्येतादृशं जड-मतिं निर्धनञ्च बन्धुं सहते । सर्वे बान्धवा एनं न केवलं परित्यजन्त्यपि तु बलादुपेक्षितुं प्रभवन्ति । किन्तु यदि दैवादेतादृशेऽपि जने भगवत्याः श्रीराधिकायाः कृपाकटाक्षः पतति, तदा तस्मिन् त्रयो गुणाः प्रादुर्भवन्ति । प्रथमं तु तस्य वाण्यामनन्यसाधारणः स्वाङ्गीकृतरसनिष्यन्दो मधुरिमा समुन्मिषति । अनेन तस्य निर्बुद्धित्वनिरासः । राधाकरुणया जडमूर्खोऽपि प्रशस्तां वाक्चातुरीमुपलभते । अथ च, सर्वाः सम्पदस्तं साञ्जलिबन्धं सेवन्ते । ऐश्वर्यस्यैतावानुत्कर्षः सम्पद्यते यदयमपरः पाकशासन इव पाकशासनैश्वर्यं तृणावज्ञायमवजानाति । एतेन दारिद्र्यदोषनिराकरणम् । ततस्तस्य विग्रहे कन्दर्पशरीरकान्तिनिभा कान्तिः प्रादुर्भवति । एवं दोषद्वयनिराकरणपूर्वकमभूतपूर्वकान्तिप्रकटननिमित्तीभूतत्वाद् राधिकायाः करुणाकटाक्षः सर्वोत्कर्षेण वर्त्तते, इत्यहो महिमा कवेः कमनीयायाः वर्णनशक्तेः ।

**तुल्ययोगितालङ्कारः** । अत्र राधिकानिरीक्षणे प्रस्तुतेऽप्रस्तुतैः रसझरी-पौरन्दरीसम्पदनङ्गश्रीभिः पदार्थैः सह प्रकटनक्रियाया धर्मस्य सम्बन्धात्तुल्य-योगितालङ्कारः ।

**शार्दूलविक्रीडितं छन्दः** ।

## ( २७ )

**पद्या कापीति** । हे राधिके ! रसेन दिव्यानन्दनिस्यन्देनोल्लसन् वर्धमानो यो मधुरिमा माधुर्योत्कर्षस्तस्य श्रियः शोभास्तासां परमानन्दसमुल्लसन्माधुर्यरुचीनां काप्यनिर्वचनीया पद्या मार्गपद्धतिः । पदवीति यावत् । पादाय हित इत्यर्थे "शरीरावयवाद्यत्" पा० ५।१।६ इत्यनेन यत्प्रत्यये कृते सति "पद्यत्यतदर्थे" पा० ६।३।५३ इति पद्भावः । ईदृशी तव राधिकाया इन्दीवरस्य नीलकमलस्येयमैन्दीवरी नवनीलनलिननिभा हृद्या मनोहारिणी दृष्टिस्तव कवे; त्वत्स्तुतिपरायणस्य सहृदयभक्तकवेराननान्मुखात् क्षरन्निरन्तरं च्यवन् यो रस आनन्दरसस्तस्य यन्महासाम्राज्यं सार्वभौमैश्वर्यविषयदम्भमर्यादापरिसरस्तेन युक्तां पद्यावलीं पद्यरचनापरम्परां निरर्गलमर्गलारहितं यथा स्यात्तथा, सर्वविध-प्रत्यूहविरहितमित्यर्थः, धाराप्रवाहेण प्रादुष्करोति प्रादुर्भावयति । अपि च, गद्यालीं गद्यपङ्क्तिं कवेर्मुखात्सततं प्रादुर्भावयति । हे राधिके ! सा तव मनोज्ञा

दृष्टिर्मेऽपि मह्यमपि मुखाग्रे या नर्त्तनकला नृत्यकलाचातुरी तस्यां दक्षां निपुणां गिरं वाणीं दद्यात् ।

**अयमाशयः ।** भगवत्याः श्रीराधिकाया दृष्टिर्मधुरातिमधुरशोभासम्पदां कोऽप्यनन्यसाधारणः पन्थाः । अत्रापि निरन्तरं रससमुल्लासान्मधुरिम्णः समुत्कर्षातिशयोऽभिव्यज्यते । रससंसिक्तमाधुरीसाधुरुचा पथिस्वरूपे दृक्पथे आगमनसमकालमेव भक्तकवेर्मुखाद्धाराप्रवाहेण गद्यपद्यरचनातरङ्गिणी प्रवहति । रचनायामेतादृशी प्रतीतिः प्रादुर्भवति यथा सा केनाप्येतादृशेन मर्यादावरणेन समावृतशरीरा, यत्तस्याः सततमानन्दरसो विगलति । ईदृगलौकिककवित्वशक्तिदानशक्तिसम्पन्नां राधिकां कविर्मुखाग्रे निरन्तरं सरस्वतीनृत्यचातुरीचतुरां वाचमुपलब्धुं प्रार्थयते । राधिकायाः कृपाकटाक्षपातमात्रेण लोकोत्तरचमत्कारपूर्णा पद्यावली गद्यावली च निःसरतीति सुदृढेन प्रत्ययेन तादृशी गीः प्रादुर्भूयादिति राधिकाकरुणाकटाक्षपातश्चङ्क्रम्यते कविनेतिशम् ।

**शार्दूलविक्रीडितं छन्दः ।**

## ( २८ )

**राधे संसृतिघर्मेति ।** हे राधे ! संसृतेः संसारसागरस्य घर्मस्त्रितापातपः स एव तीव्रतपनोऽत्युष्णो द्युमणिः (भानुर्हंसः सहस्रांशुस्तपनः सविता रविः । अमरकोषः, १, ३, ३१) । तस्य यो द्योतस्तापोष्मा तेन प्रतप्ता आत्मानो मनांसि येषां तेषां नृणां कृते । यथाहि लोके ग्रीष्मर्त्तौ चयीकृतप्रभूतेन्धनज्वालावलीढपावकावजानन्मयूखजालस्यात्युष्णदीधितेस्तापेन व्याकुलीक्रियन्ते जनास्तथैव सांसारिकत्रितापप्रचण्डतरणितापेन संतप्तानीव संपाद्यन्ते साधकानामन्तःकरणानि । एतादृशां नृणां कृते ते राधायास्तव गम्भीराण्यगाधान्यतिशीतलानि च यान्यालोकितानीक्षणानि शीतम्भःसलिलाशयन्तकि शीतानि यान्यम्भांसि वारीणि तेषां यः सलिलाशयो जलसरोवरं स इवाचरन्ति । अत्र राधिकाया आलोकितानि गभीरत्वे शीतलत्वे च शरदुदाशय इव परिकल्पितानि । यथा निदाघर्त्तौ शिशिरहृदतलब्रुडनं तापोन्मूलकं परमानन्दप्रदायकञ्च, तथैव राधिकाकरुणाकटाक्षपातोऽपि त्रिविधतापदग्धानां तापनिवारकः परमानन्ददायकश्चेति द्वयोर्नितान्तमेव साम्यातिशयः । अपि च, नलिन्याः कमलिनीलताया य आयामो दीर्घत्वं तत्सहितं यद्दाम बन्धनरज्जुस्तद्वदाचरन्ति । अत्र राधिकाया निरीक्षणानि कमलिनीलताया अतिदीर्घरज्जुरूपेण परिकल्पितानि । कमलिनीलतादामशीतलशीतलानीत्यर्थः । यथा कोऽपि दिवसकरकरदग्धदेहः शीतकमलिनीलतातन्तुरज्जुभिः परिवेष्टितदेहः सन् कामपि परां शीत-

लतां, परं प्रमोदञ्चानुभवति, तथैव भवतापदग्धदेहोऽपि जनो राधिकानिरीक्षणै-रननुभूतपूर्वां शीतलतां प्रसत्तिविशेषञ्च लभते। उभयत्रापि शैत्यप्रमोदप्रादुर्भावकत्वसाम्यम्। अपि च, प्रालेयाम्बु हिमाम्भस्तस्य निषेचनमिवाचरन्ति। हिमशीतलवारिधाराभिषेकेण यादृशी प्रसत्तिस्तादृश्येवानुभूयते राधिकानुकम्पा-झरीस्रवत्पीयूषेक्षणनिरीक्षणेन। अपि च, तुषारांशुः सुधाकरस्तस्य प्रकाशो ज्योतिरिवाचरन्ति। कलानिधेः किरणकौमुदीकीलालकल्लोलसङ्कलिततरङ्गिण्यां सम्पादितस्नानसुखमिवानुभावयन्ति राधिकानयननिरीक्षणानीति भावः।

**अयमभिसन्धिः**। राधिकाया आलोकितानां सौन्दर्यप्रतिपादने कवेर्वर्णन-चातुरी नूनमत्यद्भुतं कल्पनावगुण्ठनं परिधत्ते। राधिकालोचनेक्षणजलधारया कृतस्नानः साधकः कुत्रचिच्छीतलाम्भोभरितसरोवरशीतलताम्, कुत्रचिद्बिसिनी-बन्धरज्जुपाशस्पर्शसौख्यम्, कुत्रचिद्धिमशिशिरजलाभिषेकानन्दप्रकर्षम्, कुत्र-चिच्च धूर्जटिचूडामणिमयूखमालाजालजलस्नानसुखमनुभवतीत्यहो मधुरिमा भावप्रवणतायाः।

पद्यस्योत्तरार्धे क्रियाप्रयोगचतुष्टये पितृचरणानामतीव प्रियोऽकजन्तो नामधातुप्रयोगः पुनर्विजृम्भते। एतस्य व्याकरणविषयकं व्याख्यानं तु प्रागेव कृतमास्ते।

**क्विब्लुप्तोपमालङ्कारः।**

**शार्दूलविक्रीडितं छन्दः।**

( २६ )

**प्रेमागाधेति**। हे राधे! वसन्तस्य मधुमासस्य श्रीरिव श्रीर्यस्याः सा वसन्तश्रीस्तस्यास्तवावलोकनानीक्षणानि कारणीभूतानि सन्तीति शेषः। ननु कीदृंशि तान्यवलोकनानीत्याह—प्रेम्णोऽनुरागस्य योऽगाधः पयोधिः सागरस्त-स्मिन्नुदञ्चितानि समन्तादूर्ध्वं प्रक्षिप्तानि यानि महारत्नानि तेषामग्रे भवाऽग्र्या श्रेष्ठा कान्तिरिव कान्तिर्येषां तानि तत्तादृंशि। अत्र कविनैकस्यागाधानुराग-महार्णवस्य परिकल्पना कृता, यस्मिन् महार्घाणि रत्नान्यन्तःस्तले सञ्चितानि सन्ति। एतेषामूर्ध्वं प्रक्षेपेण कान्तीनां कोऽपि विशिष्टः प्रसर उद्गच्छति। एव-मेव राधिकालोचनानि। येषां कान्तिरुद्गच्छन्महारत्नकान्तिकिरणालोकनिभानी-त्याशयः। यथा सागरेऽनन्तानां रत्नानां निधिस्तथैव राधिकाहृदयसागरेऽप्यनन्ता-नामौदार्यादिगुणानां निधिः। यथा रत्नेभ्यो मयूखालोकः प्रसरति तथैव राधिका-लोचनाभ्यां गुणगणाः प्रसरन्ति। अपि च, अलं पर्याप्तं भक्तानां भक्तिभरप्रह्वी-भूतमानसानां यदभीप्सितं वाञ्छितं तस्य साधने सिद्धौ क्षमः समर्थो लसन्

प्रचकासच्च यश्चिन्तामणिस्तद्वच्छ्रीः शोभा सदैश्वर्यं वा येषां तानि । लौकिकस्य चिन्तामणेरिदं वैशिष्ट्यं यदयं चिन्तितं वस्तु सद्यः सूते । तत्रापि सुषमाया विलक्षणा विच्छित्तिः । अत्राप्यलौकिकेन सौन्दर्यपूरेण मण्डितानि राधिकेक्षणानि भक्तानां वाञ्छितं प्रपूरयन्तीत्युभयोः साम्यम् । अथ, स्फूर्जन्ती सर्वेष्वङ्गेषु भासमाना या सूक्तिसुधा राधिकास्तुतिसूक्तिपीयूषं सैवाम्रकाननं माकन्दोपवनं तस्य यो रसश्चूतमञ्जरीद्रवस्तस्य य उन्मेषः प्रादुर्भावो येषु । विद्वांस एव पिकाः कोकिलास्तेषां य उल्लासा हर्षप्रकर्षास्तेषु । हे राधे ! वसन्तश्रियस्तेऽवलोकनान्येव कारणीभूतानीत्यहं मन्ये । यथा वसन्तर्त्तौ नवमञ्जरीमण्डितं रसालोद्यानं समन्ताच्छोभते, तथैव स्तुतिसूक्तिसुधाऽपि सर्वतः शोभते । यथा रसालमञ्जरीषु पिकाः समावर्जिता भवन्ति, तथैव सूक्तिसुधामञ्जरीषु विद्वांसः समावर्ज्यन्ते । एवं राधिकावलोकनानि जयन्ति । राधिकायाः श्रीश्च वसन्तश्रियोपमीयते ।

अयमाशयः । हे राधे ! वसन्तसमचारुतरसौन्दर्यवत्यास्तवेक्षणानि प्रेमाम्भोनिधितलोर्ध्वक्षिप्तमहारत्नकान्तिभ्योऽपि श्रेष्ठकान्तिवन्ति त्वदेकशरणानां भक्तानां सर्वात्मना सर्वविधाभिलाषसिद्धिप्रदानि, प्रचकासच्चिन्तामणिशोभातिशायीनि च विद्यन्ते । विद्योतमानसूक्तिसुधाम्रवने रसोन्मेषमनुभवतां विद्वत्कोकिलानां हर्षोल्लासेषु निमित्तीभूतानि । विद्वत्पिका अपि राधिकेक्षणरूपानुग्रहादेव स्वकीयमुल्लासमनुभवन्तीत्यर्थः ।

**उपमालङ्कारः प्रथमद्वितीयपङ्क्तौ ।** परम्परितरूपकालङ्कारश्च तृतीयस्यां पङ्क्तौ । तद्यथा— विद्वत्सु पिकत्वारोपणे कर्त्तव्ये सूक्तिसुधायामाम्रकाननत्वारोपस्य कारणत्वात् । उपमारूपकयोश्च मिथो निरपेक्षतया संसृष्टिः ।

**शार्दूलविक्रीडितं छन्दः ।**

( ३० )

**सूतिः श्यामलेति ।** राधिकाया आलोकितानां महिमानं संवर्ण्य श्लोकेऽस्मिन् कविः स्वात्मानं प्रति दृक्पातार्थं प्रार्थयते—हे राधे ! विश्वस्य जगतो विभूतीनां वर्णने परा क्षमा तात्पर्यभूमिर्वा तव दृष्टिः करुणार्द्रकटाक्षपातो मयि त्वत्स्तुतिसम्पादनैकव्रत आस्तां स्थितिं विदधातु । कीदृशीयं दृष्टिरित्याह श्यामलश्चासौ कन्दल इति श्यामलकन्दलस्तस्य श्यामाङ्कुरस्य सूतिरुत्पत्तिर्जन्मदात्री प्रसवभूमिरित्यर्थः । यथा कस्यचिच्छ्यामलवस्तुनः प्रादुर्भावयितरि निमित्तीभूते पदार्थविशेषे वर्षीयान् श्यामलिमा सन्निधत्ते, तथैव राधिकाया दृष्टिवर्णनप्रसङ्गे सर्वप्रथमं श्यामाङ्कुरस्योत्पत्तिस्थानरूपेणोपस्थापयता कविना श्यामाङ्कुरसमानत्वकल्पनया लोचनसौन्दर्यं निगदितम् । राधिकाया दृष्टिर्नीलवर्णमय्यासीदिति

यावत्। अपि च, दिशां हरितां परमा सर्वोत्कर्षेण वर्त्तमाना विशुद्धा पूतिः पवित्रता। राधिकाया दृष्टौ दिगन्तविश्रान्तानां तनुभृतां पावित्र्यापादयित्री शक्तिः सन्निविष्टेति भावः। अत्र दिशामिति पदेन दिग्वासिनां समेषां प्राणिनां ग्रहणं भवतीति बोध्यम्। अपि च, कुसुमेषुणा पुष्पधन्वना मारेण विश्वविजयाय जगदभिभवायारब्धः प्रवर्त्तितो योऽध्वरो यज्ञस्तस्यान्तिमाऽऽहुतिः पूर्णाहुतिरूपेत्यर्थः। सार्वजनीनः खल्वयं नियमो यत्सर्वेष्वपि यागविधिषु देवा आहूयन्ते। देवेभ्यो निमन्त्रणप्रदानमन्तरा न खलु कथञ्चिदपि याज्ञिको विधिः समाप्तिमश्नुते। प्रस्तुतेऽप्यशेषवसुन्धरावशीचिकीर्षुणा शम्बरारिणा कश्चित्क्रतुः समारब्धः। मन्मथप्रवर्त्तितेऽस्मिन् क्रतौ राधिकाया दृष्टिः पूर्णाहुतिरूपेणामन्त्र्यते, नो चेदयं यज्ञः कथमपि साफल्यं न व्रजेत्। सौन्दर्यस्य चरमसीमाया भगवत्या राधिकाया दृष्टिमन्तरा साक्षान्मन्मथस्यापि यज्ञरूपं कार्यं नूनमपूर्णमेवावाशिष्यत। अतएव सान्तिमेत्याकार्यते। अत्रायं ध्वनिर्यद्राधिकाकरुणेक्षणकटाक्षं विना कश्चिदपि विजिगीषुः कामपि स्वीयामिच्छां नोदर्कं प्रापयितुं प्रभवति। लोकेऽप्येतादृशी रीतिर्यत्सभायां सर्वेषां सभ्यानां भाषणानन्तरमेव पूर्णाहुतिरूपेण सभापतिराहूयते स्ववचोभिः संभावयितुमन्यथा नाशेषतां गच्छेदशेषं सभाकार्यम्। अपि च, हे राधे! तव दृष्टिः प्रियतमस्य गोपिकावल्लभस्य श्रीकृष्णस्य माननिराकृतौ मानापनोदने दूती दूतीरूपाऽऽस्ते। अत्र मानपदेन प्रणयप्रधानो निराकरणात्मकः क्रियाविशेषो ग्राह्यः। "स्वाभीष्टाश्लेषवीक्षादिनिरोधी मान उच्यते।" उज्ज्वलनीलमणिः, शृङ्गारभेदः, ६८। यदा प्रणयमानो जागर्त्ति तदा मानी मौनी च च प्रियतमो मुकुन्दो लम्बमानास्यः सन् एकाकी जनसञ्चारशून्ये स्थान औदासीन्यमवलम्बते। धृतमानाग्रहस्य प्रियतमस्य मानापाकरणाय भगवती राधा स्वकीयां परमप्रियां पुञ्जीभूतत्रिभुवनसौन्दर्यमञ्जूषां दृष्टिदूतीं प्रहिणोति। एतस्या दृष्टिदूत्या दर्शनसमकालमेव श्रीकृष्णस्य मानो ग्रीष्मसरिद्विलायं विलयमुपगच्छन्तीव तरङ्गिणी, ऊर्ध्वशोषं शुष्यन्निव महीरुहकिसलयश्च पलायते। एवं यदा राधिकादृष्टिदर्शं त्रिभुवनपतेः श्रीकृष्णास्यापि माननिराकृतिरचिरादेव, तदा प्राणिनां हृत्सु नावकाशोऽहङ्कारलेशावसरस्यापि। किञ्च, हे राधे! तव दृष्टिः, अंहः पापं तस्य ततेः परम्पराया उद्धूतिः समूलमुत्पाटिका। यथा मारुतरंहसा महीयानपि धूलीव्रजो मुहूर्त्तेनापि कालेन कणं-कणे पृथक्क्रियते तथैव राधिकाया दृष्टिरनन्तामपि पापपरम्परां सञ्चालितव्यजनानिलोद्धूतपरमाणुजालमिव बलादुन्मूलमुत्पाटयति।

**मालारूपकालङ्कारः**। एकस्मिन्नेव राधादृष्टिरूप उपमेये वस्तुनि सूतिपूत्याहूतिदूत्युद्धूतीति बहूनामुपमानानामारोपाद्। काव्यप्रकाशे तु मालारूपका-

लङ्कारविषये केवलमेतदेवोक्तम्—"माला तु पूर्ववत् ।" वृत्तिस्तु—'मालोपमायामिवैकस्मिन् बहव आरोपिताः' । इति ।

**शार्दूलविक्रीडितं छन्दः ।**

( ३१ )

**कान्तेनातीति ।** अत्र राधिकालोचनकटाक्षमहिमा संवर्णितः । हे मातः ! नेत्रयोर्लोचनयोः प्रान्तेनापि कोणभागेनाप्यशरणं मां विलोक्य कृतार्थं कुरु । अत्र कविर्मनुते यन्न खलु तस्य सविध एतावान् सुकृतसञ्चयो येन भगवती राधा स्वकीयाभ्यां विकसितनलिनीदलायताभ्यां नेत्राभ्यां तमालोकयेत्तथापि यदीयं नेत्रयोः प्रान्तभागेनापि तस्मिन् करुणाकटाक्षं पातयेन्नाम तदा कृतकृत्यमिवात्मानमाकलयेत् । नन्वशरणपदेनायं ध्वनिर्यत् स्तवनपरायणस्य भक्तहृदयस्य पर्याप्तपुण्यराशिसञ्चयाभावे राधिकाकरुणार्द्र निरीक्षणविषयत्वेऽप्यनधिकार इति चेन्न, कवेः स्वपुण्योपार्जितशक्तिशून्यत्वेऽपि केवलं राधिकानुकम्पाभरनिर्भरत्वात् । अपि च, अनेन नेत्रप्रान्तेन कान्तेनास्मत्परमप्रियेण भूयते । बलवती हि नूनमस्माकं प्रत्याशा यत्तव लोचनकोणभागस्त्ववश्यं पतेन्नामास्मासु । अतिशयमूर्जितो वृद्धिं गतो यः स्मरस्य कन्दर्पस्य मदो येन तेन । कन्दर्पो हि नाम त्वदनिर्वचनीयसौन्दर्यसन्निधानेन परमसुषमापरिमण्डितनयनकोणनिरीक्षणेन च समदः सम्पद्यते । अपि च, आनन्दितमामोहितं व्याकृष्टमतिवशीकृतञ्च प्रियतमस्य यदुनन्दनस्य श्रीकृष्णचन्द्रस्य स्वान्तं हृदयं येन तेनेति शम् । किञ्च, पदयोस्तव चरणयोराश्रितेभ्यो जनेभ्यः शुभप्रोज्जृम्भणे शुभवस्तुविस्तरणेऽश्रान्तेन कदाप्यपरिक्लान्तेन तव नेत्रयोः प्रान्तेन मामालोक्य कृतार्थं कुरु ।

**अयम्भावः ।** राधिकाकटाक्षेण सर्वप्रथमं श्रीकृष्णस्यान्तःकरणं परमप्रमोदसागरे निमज्जनजन्यमानन्दमनुभवति । यदाऽऽनन्दसंवलितं मनस्तदा मनसः समन्तात्संमोहनं भवति । मुग्धस्य च हृदयस्याकर्षणम् । आकर्षणानन्तरञ्च पूर्णरूपेण वशीकरणमिति नूनं मधुरातिमधुरोऽयं क्रमः सन्दर्शितः श्रीकृष्णहृद्वशीकारकारणीभूतं नयनप्रान्तभागमुपवर्णयता कविना ।

श्लोकेऽस्मिन् मञ्जुलेन लालित्यपूर्णेन पदविन्यासेन महती काव्यचमत्कृतिः प्रादुर्भूता । "आनन्दितामोहित०" इति दीर्घसमासघटितमपि पदं न खलु पाठकस्य स्वान्तं पीडयति । कर्मणि निष्ठान्तानां भूतकृदन्तानामानन्दितामोहितव्याकृष्टातिवशीकृतेति पदानां विशिष्टो ललितललितश्चमत्कारः साहित्यरसरसिकानां हृदयानि समावर्जयति ।

**शार्दूलविक्रीडितं छन्दः ।**

( ३२ )

**सद्धीरन्तकीति** । हे राधे ! ते दृशस्तव लोचनानि सन्ति शोभनानि हीराणीवाचरन्ति । यथा स्वच्छं चञ्चच्चपलाभं भासुरं हीरमात्मेवाच्छेद्यमदाह्यमशोष्यमक्लेद्यं सद्रत्नान्तराणि छेदयितुं प्रभवति, तथैव श्रीप्रियानयनयुगली केनापि दोषेण सर्वथाऽसंस्पृष्टा सती निखिलान्नयनविषयकान्दोषान् बलाद्धर्षयति । उत्कृष्टहीरलक्षणं तु यथा रसतरङ्गिण्याम्—

**स्निग्धं विद्युद्विभं स्वच्छमलेख्यञ्च विलेखनम् ।**
**तीक्ष्णं षट्कोणमष्टास्रं जात्यं हीरकमुच्यते ॥**

रसतरङ्गिणी २३, ५ ।

अपि च, विद्रुमाणि भीमरत्नानीवाचरन्ति । विद्रुमं तावद्रक्तवर्णकम् । तद्वदेव राधिकानयनयोश्चित्ताकर्षको रक्तिमा सन्निधत्ते । विद्रुमस्य रक्तिमा तु परिपक्वबिम्बीफलतुल्यो गुञ्जाबन्धूकजवाघुसृणदाडिमीकुसुमसदृशः परिकीर्त्तितः । नयनयोरप्येतादृशी गूढ़रक्तकान्तिः सौन्दर्यमधुरिमाणं चमत्करोति । तत्र विद्रुमलक्षणम्—

**'आरक्तं मञ्जुलच्छायं स्निग्धं वृत्तञ्च निर्व्रणम् ।**
**दीर्घस्थूलं गुरुदृढं ग्राह्यं विद्रुममुच्यते ॥**

रसतरङ्गिणी २३, १२९ ।

अथ च, अहो आश्चर्यम् ! मनागीषन्मुक्ताफलानि शौक्तिकेयानीवाचरन्ति । शारदसुधाकरमण्डलधवलज्योतिसदृंशि शशिप्रियाणीव श्रीप्रियालोचनानि किञ्चिद्धावल्ययुक्तानि सन्ति कस्य वा युगलोपासनापरायणस्य भागवतस्य हृदये परां तुष्टिं न प्रादुर्भावियेयुः ? मुक्ताफललक्षणन्तु—

**'चन्द्रोद्भासि स्थूलमत्यन्तरम्यं**
**स्निग्धं वृत्तं निर्व्रणं निर्मलं यत् ।**
**धत्ते न्यस्तं यत्तुलायां गुरुत्वं**
**प्राज्ञैरुक्तं मौक्तिकं तत्तु जात्यम् ।'**

रसतरङ्गिणी २३, ६४ ।

पार्श्वयोरेतानि माणिक्यानीवाचरन्ति । दाडिमीकुसुमरक्तारविन्दाभमाणिक्यसदृशो रक्तिमा नयनपार्श्वयोः सौन्दर्यं द्विगुणयति । माणिक्यं हि तावत्—

**'रक्तोत्पलदलच्छायं रम्यं दीप्तप्रभं परम् ।**
**वृत्तायतं समाङ्गञ्च माणिक्यं जात्यमुच्यते' ॥**

रसतरङ्गिणी, २३, ४४ ।

परिसरेऽपि प्रान्तभागेऽपि गारुत्मतानि हरिद्रत्नानीवाचरन्ति । शुकपक्षनिभो वर्णो नयनप्रान्तभागयोर्नयनगोचरः सन् प्रसत्तिविशेषं जनयतीति सुविदितं समेषां साहित्यशास्त्ररसिकानाम् । अपि च, अन्तरे मध्ये शाणे निकषोपले योत्कृष्टिर्घर्षणं तयोत्कृष्ट्या घर्षणहेतुना ते दृशोऽतिकृष्णकृष्णमणय इवाचरन्ति । यदा किमपि वस्तु शाणे घृष्यते तदा वस्तुनो वर्णो नूनमुज्ज्वलतरः सम्पद्यते । एवमेव श्रीप्रियाया नयनमध्यभागे श्यामाः कनीनिकास्तथा प्रतिभान्ति यथा शाणे घृष्यमाणा अतीव कृष्णा मणयो भवेयुः । तेन च नयनयोः सौन्दर्यातिरेकः । हे राधे ! इत्थं ते दृशो विविधरत्नविनिर्मिता इव प्रतिभान्ति । अपि च, अन्तरे भवमान्तरं यदान्ध्यं हृदये परां वृद्धिं गतो यो मोहान्धकारस्तत् क्षिपन्ति बहिर्निष्कासयन्तीत्यान्तरान्ध्यक्षिपस्तव लोचनानि जयन्तकि सर्वोत्कर्षेण विजयन्ते । यत्र यत्र श्रीप्रियाकृपाकटाक्षपातस्तत्र तत्र मोहान्धकारविध्वंस इति भावः ।

अयमभिसन्धिः । हे श्रीराधे ! त्वल्लोचनानि हीरविद्रुममौक्तिकमाणिक्यगारुत्मतकृष्णमणीतिषड्रत्नविनिर्मितानीवाहं मन्ये । तेन च ईषत्पीतरक्तश्वेतारुणहरित्कृष्णवर्णप्रभाभास्वरतया नयनसौन्दर्यस्य चूडान्तं निदर्शनम् । एवंविधनयनोन्मीलनसमकालमेव ताभ्यां रत्नविनिर्मिताभ्यां नयनाभ्यां किरणानामेतादृशः प्रकाशपुञ्जः समन्तात्प्रसरति यद्भक्तानां हृदयान्तराले घनीभूतो मोहान्धकारो द्रागेव पलायते ।

**द्विलुप्ता क्विब्गतोपमा ।** सद्धीरन्तकि, विद्रुमन्तकि, मुक्ताफलन्तकि, माणिक्यन्तकि, गारुत्मतन्तकि, कृष्णकृष्णमणयन्तकि, जयन्तकीत्येतेषु प्रयोगेषु सर्वत्राकजन्तः क्विब्प्रत्ययः समुल्लसति । तद्विषयिणी व्याकरणशास्त्रसम्बन्धिनी प्रक्रिया तु द्वितीयश्लोकव्याख्यानावसर एव स्पष्टं प्रतिपादितेति तत्रैवानुसन्धेया ।

**मालोपमालङ्कारश्च ।** एकस्या एव दृष्टेर्विच्छित्तिकारिण्या वचोयुक्त्या नैकधा चेतःप्रमोदोद्भावयितृवर्णनप्रसङ्गात् । एकस्यैव वस्तुनोऽनेकरूपेणोपस्थापनेन कवेर्नितान्तं पाटवं प्रकटीभवति । एकैव दृष्टिः क्वचिद्धीरेण, क्वचिद्विद्रुमेण, क्वचिन्मुक्ताफलेन, क्वचिन्माणिक्येन, क्वचिद्गारुत्मता, क्वचिच्च कृष्णमणिनोपमितेत्यहो महीयान् कल्पनाविधिः ।

**क्रियोत्प्रेक्षालंकारश्च ।** रत्नविनिर्मिता इवेति दले । उपमोत्प्रेक्षयोर्मिथो निरपेक्षत्वात्संसृष्टिः ।

**शार्दूलविक्रीडितं छन्दः ।**

( ३३ )

**राधे त्वन्मन्दहासेति।** हे राधे ! तव मन्दहासस्य मन्दस्मितस्य या द्युतिः कान्तिस्तस्या यो विशदिमा धवलिमा तस्मिन् विशदिमनि समन्ताद्विष्वग् द्योतमाने, आलोकिते सतीति यावत्। यदा भगवती राधा मन्दं मन्दं हसति तदा तस्या मन्दस्मितात् कान्तिरूपेण न्यक्कृतमथ्यमानार्णवदुग्धधवलकान्तीनां किरणानां परम्पराः सर्वतः प्रसर्पन्ति। अस्मिन्नष्टदिक्कोणान्तःपातितिमिरापनोदनक्षमे शुभ्रांशूस्रालोकनिभे प्रकाशपुञ्जे प्रद्योतिते सति सर्वेऽपि धवलिम्नः प्रतिनिधिभूताः पदार्थाः, राधिकास्मितश्वेतरश्मिजालं श्वेततायाश्चरमावधिमिव दर्शं दर्शं स्वकीयेनात्यल्पेन श्वेतवर्णेनावगणितस्वज्योतिर्वर्णप्रकाशा इव, परमसुन्दरसीमन्तिन्याः सौन्दर्यदर्शं स्वरूपरूपाभावानुभवशीला लज्जिता इव ललनाः, लज्जिता इव वा स्वस्वमुखान्यवगूहितुं द्रागेव पलायन्ते। येन हि नोपहसेल्लोको राधिकास्मितालोकदर्शनानन्तरं सर्वथाऽऽलोकविरहितानिव प्रतीयमानानिमान् धवलधवलानपि पदार्थान्। तद्यथा—प्रायः प्रायशोऽयमिन्दुः सुधाकरो लज्जयागतानामेकत्रभूतानां घनानां स्तनयित्नूनां पटलेषु सञ्चयेषु निलीन इवास्ते। इन्दोर्निलीनत्वेनात्र क्रियोत्प्रेक्षालङ्कारः। लोके हि कुमुदबान्धवः स्वकीयेन धवलिम्ना धवलेषु पदार्थेषु मूर्धन्यमवगाहते, किन्तु राधिकाया हास्यस्य किरणजाले प्रसृते सत्येतावान्मलिनः संपद्यते यदयं वराकोऽनन्यगतिकतया लज्जानमितमुखबिम्बस्तत्कालमुपस्थितेषु श्यामलेषु सजलजलदेषु स्वात्मानमपह्नुतवान्। एवं यदा शर्वरीशस्यापीदृशी शोचनीया दुरवस्था सम्पन्ना, तदा का कथा खल्वन्येषां सामान्यानां श्वेतपदार्थानाम्। सर्वेषामेवैतादृश्येव दशा संवृत्तेत्याह। तूलं कार्पासं वृन्तेषु कुसुमप्रवसबन्धेष्वात्मानं जुगोप। तूलं हि तावद् वृन्ताद् बहिर्निगच्छत् सद्दुग्धधवलधवलिम्नोडुराजपरिवेषकैतवमिव फेननिकुरम्बतुल्यमट्टहासमिव वात्मनि धारयद् भ्राजते, किन्तु राधिकाया मन्दहासकान्तिमालोक्य पुनस्तद्वराकं लज्जावधीरितसौन्दर्यं सद् वृन्तेषु प्रत्यावर्त्तते। अपि च, सलिलरुहततेः श्वेतकमलपरम्पराया मूलं कन्दः कर्दमे पङ्के गत्वा निलीनं भवति। शेषोऽतीव श्वेतोऽनन्तोऽपि नागलोके पाताले निलीनः। क्षीरं धवलं दुग्धं स्तनेषु सर्वासां स्त्रीणां कुचेषु निलीनं प्रच्छन्नम्। सिता धवलवर्णाश्च याः सिताः शर्करास्ता अपीक्षुषु रसालेषु स्वोद्गमस्थानेषु यत आगतास्तास्वेव गत्वा पुनरदर्शनं गताः। मुक्ताश्च शशिप्रभाः श्वेतवर्णाः शुक्तिमणयोऽपि शुक्तिबन्धनेषु शौक्तिकेयसमुद्गमस्थानभूतबन्धनस्थानेषु पुनर्निलीनाः।

**अयम्भावः।** नेदं विस्मरणीयं यच्छ्लोकेऽस्मिन् दृष्टान्तरूपेणोपस्थापिताः सर्वेऽपि सप्त श्वेतपदार्था अपत्रपात्रप्तवदना लज्जालवः सन्तः स्वकीयेषु श्याम-

लेषूद्गमस्थानेषु प्रच्छन्नाः। तद्यथा—वर्षणोन्मुखेषु मेघपुष्पपटलभाराक्रान्तेषु सुदिरेषु घनीभूतान्धकारनीलाञ्जनसन्निभो नीलिमा सन्निधत्ते। एवमेव वृन्तेषु कर्दमेषु च श्यामश्यामो हि वर्णः। नागलोकः सर्वतः सूचीभेद्यतमःप्रसरावृतोऽसित एव सितं शेषमङ्कीकरोति। ऊधस्योद्गमकाल उरसिजचूचुकेषु कुचाननरूपेण नूनमेकोऽतीव नीलः परिधिर्वितन्यते। इक्षवः शुक्तयश्च श्यामश्यामाः। एवं सर्वेषां श्वेतवस्तुतिरोधानस्थानभूतानां पदार्थानां कृष्णवर्णतया राधिकाहासकिरण-प्रकाशावधीरितस्वश्वेतवर्णदर्पाः पदार्थाः कलङ्कपङ्कलेपमलिनीकृतकलेवरा इव प्रतिभान्तीत्यर्थः

**व्यतिरेकालङ्कारः**। सर्वेभ्यः सप्तसंख्याकेभ्यो धवलिम्नः प्रतिनिधिभूते-भ्यश्चन्द्रकार्पासकुमुदानन्तदुग्धशर्करामौक्तिकेभ्यो राधिकामन्दहासप्रकाशस्योत्कर्ष-प्रतिपादनाद् व्यतिरेकः। तुल्ययोगितालङ्कारश्च। राधिकामुखश्वेतिमनि जागरूके सत्यन्येषामप्रस्तुतानां कलानिधितूलाम्बुरुहशेषसितादीनां वस्तूनां निलीनत्वरूपेण क्रियागतेन धर्मेण सहाभिसम्बन्धात् तुल्ययोगितालङ्कारः। तद्यथा काव्यप्रकाशे— "नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता।" द्वयोर्मिथो निरपेक्षतया च संसृष्टिर-लङ्कारः।

**स्रग्धरा छन्दः।**

( ३४ )

**श्रीराधेऽञ्जलीति**। हे श्रीराधे! ते तवापाङ्गयोर्लोचनप्रान्तभागयोर्यत् सच्छोभनं रोचिस्तेजःकान्तिस्तस्मै वयं त्वन्नयनोत्पलदलदलितदर्पाः प्रारब्धवैश्वा-नरदग्धहृदयभूमिशुष्काजिरेऽधिगतभक्त्यङ्कुरा अञ्जलिबन्धनं तनुमहे सकरयुग-सम्पुटीकरणं प्रणामपरम्परा विस्तारयामः। कीदृशं त्वदपाङ्गरोचिरित्याह— कामस्य पुष्पधन्वनोऽद्भुतः परमाश्चर्यास्पदीभूतो यो विक्रमोऽतीव शक्तिशालिता तस्य यः क्रमः पदवी तं पुष्णातीति तस्मै। सत्यं यत्स्मरः परमपराक्रमी, किन्तु स्वपराक्रमाक्रान्तनिखिलभुवनेनाप्यनेन कुतः खल्वेतादृशः पराक्रमातिशयोऽधिगत इति परीपृच्छायां कविः श्रीराधानयनकटाक्षमेव कारणत्वेव चिन्तयति। राधिका-लोचनपरिसरकोणयोः समन्तात्प्रसर्पता प्रकाशातिशयेन नेत्रयोश्चरमसौन्दर्यस्य शोभासुन्दरी सर्वथानावृतावगुण्ठना सती स्वकीयां मनोरमां रूपमाधुरीं दिदर्श-यिषतीति व्यज्यते। अपि च, सम्पद्रूपिणी या सरित्तरङ्गिणी तस्याः कृते प्रावृड् वर्षणं तस्मै। यथा स्वतःप्रभूतपयःपूरा नदी निरन्तरं प्रवहन्त्यपि कदाप्य-शेषशेषतां नोपलभते, वर्षर्त्तौ च पयोधरासारस्फीतसलिला कथमपि न शुष्यति, तथैव राधिकास्तवनसुधारसरसिकरसनानां भक्तानां धनधान्यैश्वर्यतरङ्गिणी स्वकीयेनोर्जस्वितघनजलप्रवाहेण धाराप्रवाहेण निरन्तरं प्रवहति। राधिकालोचन-

कटाक्षकिरणालोकस्तु राकेन्दुमण्डलकिरणकौमुदीपरिवर्धितापाराकूपार इव, धारासंपातवृष्टिरिव परिकल्पितः। राधिकानेत्रापाङ्गज्योतिः सम्पत्तरङ्गिणी-पूरपरिवर्धकं वर्षारूपमित्याशयः।

अपि च, सर्वेषामनर्थानां दुखानां निबन्धनं कारणीभूतं यदत्यघमतिशय-पापं तत् पिनष्टीति तस्मै। राधिकाया नयनकोणेभ्यो बहिः प्रस्फुटन्ती कान्तिः समेषामनर्थानां निवारणायालम्। अनार्थानां भित्तिस्तावदतिशयपापसञ्चयमूला। पापस्य च निबिडान्धकारनिभो वर्णः कविसम्प्रदायेन। रोचिषः प्रकाशप्रभया प्रसर्पन्तो मरीचयः पापान्धकारनिराकरणे द्रुतं प्रभवन्ति। तेन च सर्वविधानर्थ-परम्पराः प्रशाम्यन्ति। अपि च, चञ्चन्तश्चलाचला द्विरेफाश्चञ्चरीकास्तैरुल्ल-सन्ति सौन्दर्योल्लासं प्राप्नुवन्ति प्रोत्फुल्लानि च प्रकर्षेण विकसितानि च यान्युत्प-लानि नीलेन्दीवराणि तेषां कान्तेरहङ्कृतिं सुषुमाया रूपगर्वं मुष्णाति चोरयतीति तस्मै। भ्रमद्भ्रमरैर्विकसितविकसितानां कुवलयानां कान्तिः परां सीमां नीयते, मधुकरपटलसाहचर्यं कुवलयदलेषु समन्तादोतप्रोतां मधुरमधुमाधुरीसत्तां प्रत्या-ययति। राधिकापाङ्गकान्तिर्नीलेन्दीवरकान्तिमतिशेते। समासेऽस्मिन् "चञ्च-द्द्विरेफ—" इत्येषा पदयोजना नूनमत्यन्तमेव मञ्जुलेति मे मतिः। एतेषां वर्णानामुच्चारणसमकालमेवैतादृशी प्रतीतिः प्रतिभाति यथा कल्पनालोच-नयोः पुरस्तात्कमलमधुपानमत्तमधुकरा उड्डीयेरन्। अत्रैवालङ्कारस्यापि मञ्जुला कोमलकोमलानुवृत्तिर्माधुर्यस्य महिमानं कथमपि न विस्मारयति। किञ्च, श्यामा श्यामवर्णविशिष्टा नीलकमलकान्तितुल्यत्वादभिरामा मनोरमा च या त्विट् कान्ति-र्यस्य तत्तस्मै अपाङ्गसद्रोचिषे वयमञ्जलिबन्धं तनुमहे करयुगलीं सम्पुटीकृत्य प्रणामान् कुर्महे।

पद्येऽस्मिन् 'रोचिषे', 'क्रमपुषे', 'प्रावृषे', 'अघपिषे', 'अहङ्कृतिमुषे', 'त्विषे' चेतिपदेषु षकारान्तोऽनुप्रासो नितान्तं मधुरश्चित्ताकर्षकश्च। इमे क्विबन्ताः प्रयोगाः कवेर्वैयाकरणत्वं द्योतयन्ति।

**रूपकालङ्कारः**। रोचिषि प्रावृषः समारोपत्वात्। उल्लेखालङ्कारश्च। एकं रोचिः कामविक्रमक्रमपोषकत्वेन, सम्पत्सरिद्वर्षकत्वेन, सर्वानर्थजनकपाप-पेषकत्वेन, नीलेन्दीवरसुषमागर्वमोषकत्वेन चानेकधोल्लिखितमित्युल्लेखालङ्कारः। तद्यथा—"एकेन बहुधाल्लेखेऽप्यसौ विषयभेदतः", कुवलयानन्दः, २३। इमां कारिकामधिकृत्य वृत्तिकारस्तु—'ग्रहीतृभेदाभावेऽपि विषयभेदाद्बहुधोल्लेखाद-सावुल्लेख इति प्रतिपादयामास। प्रस्तुते तु ग्रहीतृभेदाभावेऽपि विषयभेदाद् बहु-धोल्लेखो बोध्यः।

**शार्दूलविक्रीडितं छन्दः।**

( ३५ )

**अशेषजगदिति** । हे जननि राधे ! ते तवेक्षितान्यवलोकितान्यशेषाणि निखिलानि यानि जगन्ति भुवनमण्डलानि तेषां या आपदो विपत्परम्परास्तासामुद्दलने विदारणे दीक्षितानि गुरुकृपाधिगतविपदुन्मूलनदक्षमन्त्रयुक्तत्वाद्विशिष्टमन्त्रबलयुक्तानीव । अपि च, उपात्ता नयनयोः समीपे गृहीता या मषिर्नेत्राञ्जनं तया मञ्जुलानि मनोहराणि । किञ्च, उदित ऊर्ध्वं गतो यो खञ्जनस्तन्नामा पक्षिविशेषस्तस्य त्विडिव त्विट् कान्तिर्येषां तानि । खञ्जनो ह्यतीव चञ्चलो भवतीति विशेषः । तथैव राधिकाया ईक्षणानि चञ्चलत्वाद् रुचिराणीत्याशयः । अथ, अगं गोवर्धनाख्यं गिरिं बिभर्त्तीति तस्य । मखविरामकुपितपुरन्दरारब्धसंवर्त्ताभ्रासारेभ्यो व्रजवासिनां संरक्षणायानायासेनैव कराङ्गुलिसंस्पर्शमात्रोत्थापितगिरिराजस्य हरेर्गोपिकावल्लभस्य श्रीकृष्णस्य हृदयस्यान्तःकरणस्य मोहन आकर्षणे प्रमोषणे विचक्षणान्यतीव चतुराण्यनुपमानि चोपमाविरहितानि यानि मन्त्रबीजानि तानीवाचरन्ति ।

अत्र राधिकावलोकितानि सर्वप्रथमं श्रीकृष्णस्य मानसं मोहयन्ति, ततो बलादावर्जयन्ति, ततश्च प्रमुष्णन्तीत्यहो नूनमश्रुतपूर्वेव कापि विशिष्टा चातुरी ।

पद्ये मोहनाकर्षणप्रमोषणानां क्रमो महता रुचिरत्वेनोपस्थापितः कविना । आमूलचूलं वैदर्भी रीतिर्नृत्यतीति । न केवलमस्मिन्नेव श्लोकेऽपि तु सर्वेष्वपि श्लोकेषु वैदर्भी शैली, सुकोमला वर्णाः, पदे पदे च कर्णप्रियो मधुरसंगीतनाद इवानुप्रासः समुल्लसतीति नूनमनन्यसाधारणमत्युद्भुतश्चास्ते परमपूज्यचरणारविन्दानां कवितानिर्माणनैपुण्यम् । पद्यस्य प्रथमपङ्क्तौ 'दा, दु, द्द, दी' इत्येषां वर्णानां, तत्रैव पुनः 'क्षि, क्षि' इत्येषां वर्णानाञ्चानुप्रासच्छटा हठादेव श्रोतृणां मनांस्यावर्जयन्ति ।

कवेर्मन्त्रशास्त्रविषयकं पाण्डित्यमत्रानुस्यूतम् । विदितमेव मन्त्रशास्त्रमर्मज्ञानां विदुषां यत्सर्वेभ्यो मन्त्रेभ्यो बीजमन्त्रे ह्यधिकाधिकबलशालिनी परमरहस्यनिधिमञ्जूषामयी कापि विलक्षणा शक्तिः सर्वत्रोद्वेलितेव समुन्मिषति, तद्वदेव राधिकेक्षणान्यद्वितीयमन्त्रराजस्य बीजमन्त्राः सन्ति । अत्रापि दीक्षितानीत्यनेन विशेषणेन मन्त्रः, बीजमन्त्रः, दीक्षाविधिश्चाभिव्यज्यन्ते । मन्त्रसाधनक्रियायां मन्त्रबीजमन्त्रयोर्ज्ञानमन्तरा यथाविधि दीक्षाग्रहणमन्तरा च मन्त्रसिद्धौ कथमप्यर्थक्रियाकारिता न प्रादुर्भवति । अतएवावलोकितानां तथा निरूपणम् ।

**त्रिवब्लुप्तोपमालङ्कारः** । अनुपमो यो मन्त्रस्तस्य बीजानीवाचरन्तीत्यर्थे

विवबन्तः प्रयोगः। अकजन्तनामधातोर्व्याकरणविषयकं विवरणं तु पूर्वमेवोपात्तं द्वितीयस्मिन् पद्ये, तत्रैवानुसन्धेयम्।

**पृथ्वी छन्दः।**

( ३६ )

**राधेऽपाङ्गेति।** हे राधे! अपाङ्ग एव सुधांशुस्तेनापाङ्गसुधांशुना मम ध्वान्तं मोहान्धकारमज्ञानान्धकारं वा भवती धुनीतां कम्पयतामिति योजना। कीदृशेन तेनापाङ्गसुधांशुनेति चेदाह—अन्तरे भवमान्तरं हृदयान्तर्गतं यत्तमोऽज्ञानान्धकारस्तस्य नाशाय विध्वंसनाय या क्रिया व्यापारविशेषस्तया वित्तेनेति क्रियाचुञ्चुनाऽतीव दक्षेणेत्यर्थः। अपि च, दोषरूपाणि यान्यनिष्टानि षड्विकारजा अनर्थपरम्परास्तेषां कचाकचि केशाकेशि यद् युद्धं तस्य क्रमेण प्रकारेण वित्तेन क्रमचणेन चतुरेणेति। "नास्त्येव मानवः कश्चिद्भगवान् जगतीतले" इत्याभाणकवचनात् साधकभक्तेष्वपि जन्मजन्मान्तरशुभेतरप्रारब्धजन्यानां भूयसामनिष्टानामवस्थितिसंभावनाद्भक्तान्तःकरणान्तर्वर्त्तिविविधदोषस्वरूपकानिष्टेन सह राधिकाया नेत्रापाङ्गशुभ्रमरीचिनः कचाकचि बलवत्तरं युद्धं प्रावर्त्तत। "कचाकचि" इत्यस्य पदस्य तु कचेषु कचेषु गृहीत्वेदं युद्धं प्रवृत्तमित्यस्मिन्नर्थे "तत्र तेनेदमिति सरूपे" पा० २।२।२७ इत्यनेन कर्मव्यतिहारे बहुव्रीहौ निष्पत्तिर्बोध्या। परस्परग्रहणं परस्परग्रहणञ्च कर्मव्यतिहारः इति बालमनोरमा। एतादृशस्य दारुणस्य युद्धस्य क्रियायामयं राधिकापाङ्गचन्द्रोऽत्यद्भुतचातुरीचतुरः प्रतीयते। अयं तावत्साधकभक्तहृदयस्थदोषानिष्टस्योपरि निमेषपातमात्रकालेनापि विजयते।

अत्र "दोषा" इत्यस्मिन्पदे श्लेषालङ्कारः। एकस्मिन्पक्षे "दोषः" इति पुंस्त्वे प्रयोगो बोध्यः। अपरस्मिन् पक्षे "दोषा" इति स्त्रीलिङ्गे प्रयोगः। यथाहि, दोषाया रजन्या यदनिष्टं घनान्धकारस्तेन सह चन्द्रमसः प्रतिनिशं कचाकचि युद्धं प्रवर्त्तते। बलवत्तरेऽस्मिन् युद्धव्यापारे घनान्धकारश्चन्द्रमसं पूर्णरूपेणाच्छादयितुं पौनःपुन्येन प्रयतते। चन्द्रोऽपि स्वशुभ्रकौमुदीकिरणजालेनान्धकारं पराजेतुं बद्धपरिकर इव प्रयतमानोऽन्ततो विजयी सन् स्वकीयं महिमानं प्रख्यापयति।

अपि च, आ समन्तान्नम्राः प्रश्रयान्विता असंस्पृष्टाहङ्कृतिलवास्तत्तादृशानां भक्तानां याः सम्पदस्ताः पुष्णाति वर्धयतीति तेन। किञ्च, पदानि जुषन्त इति पदजुषस्तेषां पदजुषां चरणाश्रितानाम्। √जुषी प्रीतिसेवनयोरित्यर्थेन ये भक्ताः सततं हर्षगद्गदेन हृदयेन प्रीतिपूर्वकं राधिकायाश्चरणौ सेवन्ते, तेषां पदजुषां राधिकाचरणशरणङ्गतानां (मानसे) कूलानि तटानि कषतीति कूलङ्कषं

तटोत्खातप्रवणम्, दिव्यश्च यज् ज्ञानं तस्य पयोनिधिं महार्णवं तन्वता विस्तारयता। यथौषधीपतेराविर्भावेन सरित्पतेर्महान्तः पयःपूरा परां वृद्धिं गच्छन्तः स्वाम्बुराशेरनन्तत्वं द्योतयन्ति, तथैव राधिकापाङ्गशर्वरीशेन तटोत्खातकल्पस्य दिव्यज्ञानसागरस्य विसृत्वरः प्रसरो वितन्यते । अनेन ज्ञानाम्भोधेरगाधत्वमनन्तज्ञानवारिपूर्णत्वञ्च ध्वन्यते ।

अपि च, कारुण्यस्य राधिकायामजस्रं विद्यमानस्य करुणभावस्य य उदधिस्तस्य या वीचिका लहरी तया सह भवतीति तत्तादृशेन । यथा सुरासुरैर्मथ्यमाने सत्यम्भोनिधौ सुधाकरस्तरङ्गाश्चोत्पद्यन्ते, तथैव राधिकायाः करुणासागरात्कारुण्यवीचयः सापाङ्गसुधाकराः समुत्पद्यन्ते । एतादृशेन सुधांशुना, हे राधे ! मम ध्वान्तं तिमिरं भवती धुनीतां कम्पयतामिति भावः ।

ननु "अपाङ्गसुधांशुना मम ध्वान्तं धूयताम्" इत्येतादृशेन कर्मणि प्रयोगेण भाव्यमिति चेन्न, 'अपाङ्गसुधांशुना मम ध्वान्तं धुनीताम्' इत्यस्याः पङ्क्तेः कर्मणि प्रयोगाभावत्वात् । तर्हि कीदृशोऽयं प्रयोग इति चेच्छ्रूयताम्—'रामेण बाणेन हतो बाली' इत्यस्मिन्नुदाहरणवाक्ये यथा बाणपदं करणदले नियोजितम्, तथैव प्रस्तुतेऽप्यपाङ्गसुधांशुपदं करणदल एव, न तु कर्तृदले योजनीयमित्यभिसन्धिः । एवं 'राधे' इति सम्बोधनपदम्, अपाङ्गसुधांशुनेति च करणपदम्, ध्वान्तमिति कर्मपदम्, धुनीतामिति च क्रियापदमिति सर्वं सुकरमिति शम् ।

**अयम्भावः** । यदा भगवत्या वृषभानुनन्दिन्याः श्रीराधिकाया अपाङ्गसुधांशुः समुदेति तदा सामान्यरूपेणेमाश्चतस्रः क्रियाः प्रवर्त्तन्ते । चन्द्रोदयेन प्रगाढान्धकारविध्वंस इव, प्रज्ञोन्मेषेणाज्ञानान्धकारपलायनमिव वासनासंस्काररूपेणाप्यन्तर्विद्यमानस्य रजःप्रसरोद्भूतस्य मोहाज्ञानान्धकारस्य विसंष्ठुलतां प्रापणम्, ततः षड्विकारादिदोषस्तोमोन्मूलनम्, प्रश्रयान्वितभक्तैश्वर्यप्रवर्धनम्, त्रिकालज्ञतादिदिव्यज्ञानोद्भावनञ्चेति । अयमपाङ्गसुधांशुः कारुण्यमहासागरकल्लोलैः सह प्रादुर्भवति । एवमपाङ्गपातेन सहैव करुणातरङ्गा अपि समन्तात्स्यन्दन्ते । फलतश्चन्द्रकिरणशुभ्रचन्द्रिकालोकधवलिम्ना करुणकल्लोलश्वेतमयूखमालया चापाङ्गपाते युगपदवस्थानेन तस्मिन् सर्वविधान्धकारनिराकरणक्षमत्वमसंदिग्धरूपेण सन्निविष्टम् । लोके हि यथा सर्वतः सुप्रसिद्धश्चन्द्रः समुद्रमन्थनतरङ्गावलिजलजात इति प्रसिद्धिस्तथैवायं राधिकापाङ्गरूपश्चन्द्रो राधिकान्तःकरणान्तर्वर्त्तिकारुण्याम्भोनिधिकल्लोलजलसंजात इति दिक् ।

प्रतिसमासं कृतालयाया नितान्तमनवद्यायाः कमनीयायाः कल्पनाया मनोरमेण परिधानेनालङ्कृतेऽस्मिन् परमविमले पद्ये महाकवेर्व्याकरणशास्त्रनदीष्णत्वमलङ्कारशास्त्रपारङ्गमत्वञ्च सुस्पष्टं परिलक्ष्यते ।

व्याकरणशास्त्रीयं वैशिष्ट्यं यथा—

(क) 'तमोनाशक्रियाचुञ्चुना' इत्यस्मिन् पदे, 'क्रमचणेन' इत्यत्र च "तेन वित्तश्चुञ्चुप्चणपौ" पा० ५, २, २६, इत्यनेन क्रमशश्चुञ्चुप्चणपौ विधीयेते ।

(ख) 'कचाकचि' इत्यत्र कर्मव्यतिहारार्थको बहुव्रीहिः ।

(ग) 'कूलङ्कषमित्यत्र' "सर्वकूलाभ्रकरीषेषु कषः" पा० ३, २, ४२, इत्यनेन खच् प्रत्ययो मुमागमश्च ।

(घ) धुनीतामिति क्रैयादिकादात्मनेपदे लोटि प्रथमपुरुषैकवचनम् ।

(ङ) 'अपाङ्गसुधांशुना ध्वान्तं धुनीता' मित्यस्या वाक्यरचनाया विवृतिस्तु प्रदर्शितैव पुरस्तात् ।

अलङ्कारशास्त्रीयं वैशिष्ट्यं यथा—

**रूपकालङ्कारः** । अपाङ्गसुधांशुरित्यत्र । अयञ्च बिम्बप्रतिबिम्बभावापन्न इति कारुण्योदधिपदेन सूच्यते । लोकेऽपि यथोदधौ जातेन प्रसिद्धेन परां वृद्धिं गतेन राकेन्दुना कूलङ्कषः पयोनिधिस्तन्यते, तथैव राधिकापाङ्गरूपेण कारुण्यरूपादुदधेः समुदितेन चन्द्रेण दिव्यज्ञानरूपः कूलङ्कषः पयोनिधिस्तन्यते, इति गरीयः खलु बिम्बप्रतिबिम्बभावात्मकस्य रूपकालङ्कारस्योदाहरणोपस्थापनम् ।

( ३७ )

**संदीप्ते भवघोरेति** । हे राधे ! प्रकर्षेणोर्जितं बलवद् यत्प्रारब्धमनेकजन्मोपार्जितं प्रारब्धं कर्म, तदेवामितापरिमिता वात्या वाताली, वातानां समूह इति यावत्, तया प्रबलतां नीते परां वृद्धिं नीते सति । अतएव संदीप्ते जाज्वल्यमानज्वालामालावलीढे । एतादृशे भवः संसार एव घोरं काननं घनविटपिवीथिकेसरिसञ्चारदुर्गमभीषणं महारण्यं तस्मिन् यो महादावानलः प्रचण्डो वनवह्निस्तस्मिन् प्रदीप्ते सतीति भावः । यथा कस्मिंश्चिन्महति कान्तारे प्रचण्डेन प्रभञ्जनेन वनवह्निर्नितरां सार्चिः सन् समन्तात्पलायनपरायणान् वनपशून् भृशं पीडयति, तथैव प्रारब्धरूपकेणापरिमितेन झञ्झानिलेन संसाररूपिणि कान्तारे प्रकर्षेण प्रोज्ज्वालिते सति विपिनवैश्वानरौ, तत्र विष्वक् प्रसृमरपावकार्चिश्चक्रभीतचेतसो महता जवेन परिधावन्तो जना दृढं प्रबाध्यन्ते । एतादृशे दावानले मुहुर्भूयो भूयो भ्रमन्तमभिव्याप्तमार्त्तञ्चाभिभूतञ्च माम्, हे राधे ! अमृतस्य य आसारो धारासंपातवर्षणं तत्र तदर्थं वोद्यतानि सन्नद्धानि यान्यभ्राणि पर्जन्यास्तान्युपमा येषां तानि तैरेतादृशैर्हिमवच्छीतलैस्तुहिनाम्बुशीकरशिशिरैस्तवापाङ्गकैर्नयनकोणभागैः कटाक्षनिरीक्षणैरिति यावन्मां क्षिप्रं द्रुतं शिशिरय शीतलय ।

निरतिशयमञ्जुलभावपूर्णोऽयं श्लोकः। महाकविरत्र सर्वप्रथममेकं संसार-विपिनदावानलं परिकल्पयते। यो हि नाम प्रारब्धप्रभञ्जनेन प्रदीप्तः। यस्मिंश्च निरन्तरं प्रदग्धत्वात्स्वात्मानं परिदेवितमिव मनुते। जातवेदसो ज्वालानां शमनं तु केवलं शीतशीतलसलिलधाराभिषेकेणैव संभाव्यत इति चिन्तयित्वा पद्यस्योत्तरार्धे पीयूषवर्षणोन्मुखानां नभोगजानामतीव रमणीयं रोचकञ्चोपस्थापनं जागर्त्ति। वस्तुतो यदि केवलं जगदरण्यदावानलार्चिस्ताप एवाभविष्यत्तर्हि कदाचित्कविस्तत्तादृशि कृच्छ्राणि भवतापदुःखान्यविगणय्य तत्प्रतीकारार्थं मुखामुखि प्रायतिष्यत, किन्तु प्रस्तुतेऽयं दावानलः प्रारब्धप्रबलवातरंहसा परां वृद्धिं गमितः। ईदृशस्य वनवह्नेर्निर्वापणं तु केवलं प्रभूतेन नीरराशिनैव संभवतीति हेतोरत्र नूनं काप्यनिर्वचनीया कल्पनाया मसृणता परिकल्पिताऽऽस्ते। राधानयनयोरजस्रं भवतेषु करुणाकीलालं परिस्यन्दते। इमे हि निश्च्योतमानाः करुणानीरकणाः सुधाधारापातवर्षणमिव, राधिकालोचनापाङ्गाश्च वर्षणशीलसजलजलदा इव परिचिन्तिताः। सजलजलदेषु रुचिरो नीलिमा निवसति। नीलिम्नः साहचर्ये नेत्रापाङ्गलक्ष्मीरधिकतरं शोभते। एवं बलवत्तरोऽपि प्रारब्धो भगवत्या राधिकायाः कृपाकटाक्षेण जेतुं शक्य इति ध्वनिः।

रूपकालङ्कारः। भवघोरकाननमिति पदे भवे घोरकाननत्वारोपाद्रूपकालङ्कारः। प्रारब्धामितवात्येत्यत्रापि प्रारब्धे वात्यारोपणाद्रूपकालङ्कारः। हिमशीतलैरित्यत्र लुप्तोपमालङ्कारः। उपमारूपकयोर्मिथो निरपेक्षतया संसृष्टिरलङ्कारः।

शार्दूलविक्रीडितं छन्दः।

( ३८ )

**बाणैः पञ्चेति।** हे गीर्वाणेश्वरि! गीर्वाणा निर्जरास्तेषामीश्वरि देवानामपि स्वामिनि राधे! वीक्षणैः स्वनिरीक्षणैर्मम संसारतापतप्तचेतसः शुचां शोकानामम्बुधिं जलनिधिं शोषय। किम्भूतानि तानि राधिकावीक्षणानीति चेच्छ्रूयताम्— पञ्चशरस्य पुष्पधन्वनः कन्दर्पस्य बाणैर्बाणरूपैर्वीक्षणैः। यद्यपि मन्मथस्य बाणाः पुष्पमयत्वादतीव कोमलास्तथापि परेषामन्तस्तलमपि विध्यन्तः परान् पराजयन्ते, इति महीयान् विरोध एतेषां प्रकृतौ। एवमेव यद्यपि राधिकाया अवलोकितानि सर्वाण्यपि मृदुलवस्तून्यतिशेरते स्वकीयेन म्रदिम्नोऽतिशयेन, तथापि शोकसागररिपुनिर्मथनक्षमाणीति मिथो विरोधिस्वभावसंघटितानि। शरणाश्रितानां कृत एकतः कोमलातिकोमलकुसुमस्पर्श इवाचरन्ति, अपरतश्च तेषां मोहाज्ञानादीनां कृते निशितशरनिकराघाता इवाचरन्तीत्याशयः। अपि च, स्वसेवां

जुषन्त इति स्वसेवाजुषस्तेषां परमप्रीतिपूर्वकं राधिकाचरणसेवापरायणानां भक्तानां कृते कल्पितभवत्राणैर्भवपरिपालकरूपेण कल्पितैर्विचारितैरिति । यदेहृशि निरीक्षणानि भक्तस्योपरि पतन्ति, तदा तत्कालमेव तेषां भक्तानां संसारसागरात्परित्राणं सञ्जायते । यतः खल्विमानि भवसागरत्राणे गृहीतदीक्षाण्यतस्तद्व्यापारे विदग्धतमानि जयन्ति । अथ, निर्वाणः परमानन्दस्तदेकरसैर्निवृ त्याकारघटितैः । राधिकाया वीक्षणेभ्यो ब्रह्मानन्दसहोदरस्य परमानन्दस्य कोऽप्यनिर्वचनीयो रसो निरन्तरं प्रस्रवति । यस्मिन् परमानन्दरसस्रोतसि कृतस्नानः साधकः परां शान्तिमनुभवति, सर्वविधशोकसन्दोहञ्च सर्वथा विस्मरति । एवमेव हरेः श्रीकृष्णस्य वशीकृतिविधौ वशीकरणक्रियायां मन्त्रायमाणैर्मन्त्रैरिवाचरद्भिः । लोकेऽपि यदा कश्चित् कञ्चिद् वशीचिकीर्षति, तदा मन्त्रसाधनक्रियया सर्वातिशायी बलप्रयोगः समाश्रीयते, तद्वदेव यदा भगवती राधा भगवन्तं श्रीकृष्णं वशीकर्त्तुं चिकमिषते तदा स्वकीयं नयनकटाक्षनिरीक्षणात्मकं मन्त्रबलं प्रयुङ्क्ते । अनेन कटाक्षमन्त्रप्रयोगेण श्रीकृष्णो झटित्येव राधिकावंशवदः सन् मन्त्रबलगरिमाणं द्योतयति । एतदेव नूनमबलानां प्रबलत्वं यत्ताः स्वदृष्टिपातमात्रेणैव भगवत्सदृशानपि प्रबलान् महापुरुषान् वशीकुर्वन्ति । गभीरभावगर्भितोऽयमर्थः मञ्जुलपदविन्यासललितया परमरमणीयया सरण्या पद्येऽस्मिन् सन्नियोजितः । स्वसखीजनस्य कृते प्राणाः—स्वसखीप्राणापरपर्यायाणि राधिकानिरीक्षणानीत्याशयः । अपि च, एण्या हरिण्या दृशः प्रमाणैर्हरिणलोचनसदृशैस्तद्वदाकर्णायतैरिति यावत् । तव वीक्षणैर्मम शोकाम्बुधिं शोकसागरं शोषय ।

**रूपकालङ्कारः** । वीक्षणरूपे विषये पञ्चशरबाणत्वस्य, भवत्राणत्वस्य, निर्वाणरसत्वस्य, मन्त्रायमाणत्वस्य, प्राणस्वरूपत्वस्य, दृशः प्रमाणत्वस्य च विषयिणामारोपाद्रूपकालङ्कारः । बाण-त्राण-निर्वाण-मन्त्रायमाण-प्राण-प्रमाण-गीर्वाण-वीक्षणेत्यनुप्रासयोजनापि नितरां मनोहारिणीति मे मतिः ।

**शार्दूलविक्रीडितं छन्दः** ।

( ३६ )

**स्वैरापाङ्गे**ति । हे राधे ! इहास्मिन् भवसागरे स्वैरं यथेच्छं यथा स्यात्तथा सञ्चालिता येऽपाङ्गयोर्नेत्रप्रान्तभागयोर्लवा लेशास्तैरपि द्रुतं त्वरितम्, परमञ्च तदैश्वर्यं सर्वातिशायिनीमैश्वर्यपरम्परां किरन्त्यां धारासारैरिव वर्षत्सु जलधरेष्विव विकिरन्त्यां त्वयि राधिकायां जाग्रत्यां जागरूकायां सत्यां यो नरोऽज्ञातवृषभानुजामहिमानुभावः अपराश्च ते सुरा अपरसुरास्तानपरसुरानिन्द्रवरुणकुबेरप्रभृतीन् वृन्दारकानादरादाराधयति सादरोन्मेषमुपास्ते सोऽयमेतादृशोऽज्ना-

राधितराधिकाक आराधितान्यदेवताको जनो दिव्यपयसोऽलौकिकमाधुरीसाराम्बुराशेः भागीरथीं मन्दाकिनीं सन्निधावेवापास्य परित्यज्य (आसन्नां प्रवहन्तीं जाह्नवीं प्रविहायेत्यर्थः) तृषातुरो महत्या तृषा व्याकुलीकृतमनःकायो जडो जडवन्मन्दमतिरपारान् पातालतलोदरतुल्यानगाधान् कूपानन्धून् विचिनुते समन्वेषयति ।

अयम्भावः । राधिकायाः कृपाकटाक्षपातः परप्रेरणानपेक्षं यदृच्छयैव सर्वतः प्रसरति । अयं हि स्वतः प्रादुर्भूताया अहेतुक्या अनुकम्पाया बलमाश्रयते । न खलु कोऽपि साधनानुष्ठानादिविधिस्तं बलात्स्वाभिमुखीकर्तुमलम् । एवं यदा राधिकापाङ्गलवोऽपि कुत्रचित् परिभ्राम्यति तदा तत ऐश्वर्यस्य सर्वोत्कर्षं भजन्ती काप्यनिर्वचनीया श्रीः समन्ताद् वितन्यते । अत्र लवशब्देनैतद् ध्वन्यते यदपाङ्गलवेऽप्येतादृशी विलक्षणा शक्तिस्तर्हि का कथा खलु सम्पूर्णानामपाङ्गपातानाम् । 'परमैश्वर्य' मिति पदेनाप्यत्र विशिष्टोऽभिप्रायः कवेः । √ इदि परमैश्वर्ये इत्यस्माद्धातो रन्प्रत्यये कृते सति इन्द्रशब्दो निष्पद्यते । फलतः परमैश्वर्यशालित्वार्थाभिव्यञ्जकेन्द्रशब्दाभिधायकत्वान्न्यक्कृतवृन्दारकेशैश्वर्यभावो व्यज्यते । 'किरन्त्या'मिति पदेनायं ध्वनिर्यद्यथा पर्जन्यो जलेऽपि वर्षति स्थलेऽपि वर्षति, तथैव राधिकाकृपाकटाक्षलेशपाता अपि भक्तेष्वभक्तेषु वा समन्तात्प्रसर्पन्त ऐश्वर्यस्य परां काष्ठां वर्षन्ति ।

न च कदाचित्सा शयाना स्यादत एवास्माकमन्यान्यदेवगणोपासनायां प्रवृत्तिरिति वाच्यम्, 'जाग्रत्या'मिति पदेन तस्याः सर्वकालेषु जागरूकत्वात् । एवमनन्यभक्तिभावभरभरितहृदयानां राधाचरणजुषां भक्तानां निर्जरेश्वरैश्वर्यमप्यधिक्षिपन्ती चिरन्तनत्वोपादानालङ्कर्मीणा श्रीः शाश्वतं निवसतीति ध्वनिः । त्रिदिवेशान्तराराधनैकव्रतानां तु साधकानाम्, नूनं तादृशी स्थितिर्यादृशी कस्याप्युपगङ्गं सञ्चरतः पिपासोरनवगतगाङ्गपयोगतशैत्यमाधुर्यादिगुणस्यातिशयागाधकूपतलजलपरीष्टितृडपाकरणशीलस्येति भावः ।

**निदर्शनालंकारः** । यथाहि, राधिकां प्रविहाय विबुधान्तराणि शुश्रूषमाणो मन्दमतिः, मोचारसावधीरिणीमवश्यायशीतलताधिकशीतलां मधुरनीरधारां त्रिपथगां परित्यज्य कूपान्वेषणशीलो, जड एव । निदर्शनालङ्कारलक्षणं तु 'वाक्यार्थयोः सदृशयोरैक्यारोपो निदर्शनेति कुवलयानन्दः, ५३ ।

**शार्दूलविक्रीडितं छन्दः** ।

( ४० )

**जानीमो महतीमिति ।** हे हरिसखि ! श्रीकृष्णसहचरि ! प्राचीनो यो दुग्धाम्बुधिः क्षीरसागरस्तस्य प्राचीनदुग्धाम्बुधेः पौराणिक्यां परम्परायां प्रथितस्य क्षीरसागरस्य, त्वन्मन्दहासस्य तव मन्दस्मितस्य रसनिधेः रसार्णवस्य च महतीं भिदां महान्तं भेदं वयं जानीमः । कीदृशोऽयं राधिकाहासरससिन्धुरिति चेदाह—शुद्धोऽतीवविमलो यः श्वेतिमा धवलिमा तस्य शेवधिर्निधिः । एकतः परमपुरातनो दुग्धसागरो निसर्गत एक धवलस्तत्राप्यपारदुग्धराशिसञ्चयाभ्युदितेन धवलतरत्वम्, तत्रापि स्वतः समन्तात् प्रसर्पत्सु समुदञ्चितधवलतरदुग्धतरङ्गेषु धवलतमत्वं दृग्गोचरीभवति । अथ च, अपरो राधिकामन्दहास्यसागरः । हास्यस्य धवलो वर्ण इति कविसम्प्रदायः । यदा भगवती राधिका मन्दं मन्दं हसति तदा तस्मादपि हासमहार्णवात्सुरासुरमथ्यमानदुग्धाम्बुधेरिव धवलातिधवलस्य ज्योतिषः किरणाः प्रसर्पन्ति । अयं राधिकास्मितसागरो महाकविना परमविमलधावल्यमहाभाण्डार इवोपावर्णि । तेन च मन्दस्मिते धवलिम्नः पराकाष्ठा ध्वन्यते । महीयान् खल्वयं भेदो द्वयोरपि धवलसागरयोः । अपि च, स प्राचीनो दुग्धाम्बुधिः पुरा पूर्वस्मिन् समये मन्दराचलेन सुरासुरैः प्रमथिते क्षीरसागर एकामेव लक्ष्मीं सकृदेकवारं विष्णवे ददौ । किन्त्वेष त्वन्मन्दहाससागरो नतेभ्यः प्रश्रयान्वितेभ्यो रसिकेभ्यः सदा सर्वेष्वपि कालेषु सर्वतोऽप्यविचलाः कुतश्चिदप्यचञ्चला लक्ष्मीरैश्वर्यपरम्परा यच्छति । सा त्रिलोकप्रसिद्धा लक्ष्मीश्चञ्चला भवति । इयं तावदचञ्चला । पूर्वं केवलमेकामेव लक्ष्मीं भगवान् विष्णुरधिगतवान् । अत्र सर्वदैव भक्ता अनन्ता लक्ष्मीरधिगच्छन्तीति विशेषः ।

**व्यतिरेकालङ्कारः** । तद्यथा, एकः प्राचीनदुग्धाम्बुधिः । अपरश्च राधिकामन्दहास्यरसनिधिः । द्वयोरप्यम्बुध्योर्धवलिम्नो हेतुनाऽऽक्षिप्तं साम्यम् । ततश्च प्राचीनदुग्धाम्बुधेरपेक्षया मन्दहास्याम्बुधेर्यद्दीयान् समुत्कर्ष इत्युपमानादुपमेयस्योत्कर्षप्रतिपादनाद् व्यतिरेकालङ्कारः । अयमुत्कर्षो राधिकामन्दहास्यार्णवस्य धवलतरत्वेन, असकृल्लक्ष्मीप्रदानशीलत्वेनाचञ्चलत्वेन चाभिव्यज्यते । तल्लक्षणं तु यथा—"उपमानाद् यदन्यस्य व्यतिरेकः स एव सः ।" इति काव्यप्रकाशः ।

**शार्दूलविक्रीडितं छन्दः ।**

( ४१ )

**श्रीराधे मधुरस्मितेति ।** हे श्रीराधे ! मधुरं मनोहारि यत्ते स्मितमीषद्धास्यं तेनातिसुभगे सुदृश्यत्वादतीव मनोज्ञे ये त्वद्वीक्षणे नयने तयोर्यौ प्रान्तौ तयोः । पातस्योपक्रमकाल एव निपातारम्भसमकालमेव मूकोऽप्यवागपि वागीशतां

लभते वागीन्द्रत्वमधिगच्छति । यदा श्रीराधिकायाः परममधुरमन्दस्मितपरिमण्डि-तयोः सुषमानिधिमञ्जूषाकल्पयोर्लोचनयोः कटाक्षप्रान्तस्यापि निपातारम्भः समा-रच्यते तदा तदात्व एव सर्वथा जडबुद्धिरपि जनः सुरगुरुविलक्षणधिषणानुभावं संप्राप्याप्रतिहतगद्यपद्यनिर्माणचातुरीमधिगच्छति । अपि च, तव नेत्रापाङ्ग-पातास्पदीभूतं भवतं द्वे रमण्यौ वृणाते । के खलु ते द्वे रमण्यावित्यत आह— कुन्दस्य तन्नामकस्यातिधवलस्य पुष्पस्य, सुधांशोः पीयूषमहसो ये रश्मयः किर-णास्तैर्विशदा निरन्तरं समुज्ज्वला कीर्तिर्यशः प्रथमा रमणी । कीर्त्तिनाम घनसार-शुक्लवर्णा कविसम्प्रदायेन । अतएव धवलिम्नः प्रतिनिधिभूतयोः कुन्दकुसुमकुमुद-बान्धवयोः प्रसर्पन्तीभिर्मयूखमालावलीभिः प्रद्योतिता कीर्त्तिः कुन्दसंकाशसम-धिकोज्ज्वलवैशद्यवती शीतकिरणप्रतीकाशप्रकाशवैशद्यवती च राधिकाभक्तं वृणीते । अपि च, सा त्रिभुवनविख्याताऽद्भुता सर्वोत्तमविस्मयनिधानतां गता सर्वज्ञता सर्वदर्शिता तं भक्तं वृणीते, इति द्वितीया रमणी । कुन्दधवला चन्द्र-धवला च कीर्त्तिः, सर्वज्ञता चेति द्वे रमण्यौ तं वृणाते इत्यर्थः । ते च पुनरनीर्ष्य-मीर्ष्यारहितं यथा स्यात्तथा हर्षभरेणानन्दातिरेकेण च स्वयं परप्रेरणमन्तरैव स्वतः प्रवर्त्तिते सत्यौ भवत्या भक्त्युन्मेषप्रह्वीभूतमानसेन तं वृणाते इत्यहो मह-दाश्चर्यम् ।

**अयमाशयः** । निसर्ग एवायं सर्वासां स्त्रीणां यदेकाकिन्येवैकं पुरुषं संसे-वते । न खलु कापि ललना काञ्चिदन्यां स्वप्रियतमप्रियतमारूपेणोत्सहते । अत्र तु राधिकाकृपाकटाक्षपातमहिम्ना द्वे ललने एककालावच्छेदेन तच्चरणाश्रितं वृणाते । अद्भुतेति विशेषणेन सर्वज्ञतायाः सर्वसाधारणालभ्यत्वं ध्वन्यते । स्वय-मिति पदेन स्वतः परप्रेरणानपेक्षं वरणे प्रेरणा । अनीर्ष्यमिति पदेन नैसर्गिकेर्ष्या-भावपरित्यागः । "भवत्येति" पदञ्च गर्वस्य सर्वथा चूर्णीभावं सूचयति ।

**अक्रमातिशयोक्तिरलङ्कारः** । इयं तावत्कुवलयानन्द एवं संलक्षिता—"अक्र-मातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोः" । कुवलयानन्दः, ४१ । तद्यथा, राधिका-दृष्टिपातरूपं कारणम्, कीर्त्तिसर्वज्ञताकर्त्तृकं वरणरूपं कार्यम् । अयं खलु सार्व-त्रिको नियमो यत्कारणं कार्यनियतपूर्ववर्त्ति तिष्ठतीति । अत्रापि राधिकापाङ्ग-पातोपक्रमः कारणम्, तदुभयकर्तृकं वरणरूपं कार्यञ्च सहैव वर्णितमित्यक्रमाति-शयोक्तिरलङ्कारः ।

मम्मटाचार्येण काव्यप्रकाशे प्रतिपादितातिशयोक्तेश्चतुर्थप्रकारस्त्वत्र न संघटते ।" कार्यकारणयोर्यश्च पौर्वापर्यविपर्ययः" इत्यात्मकस्य काव्यप्रकाशोक्त-

लक्षणस्य प्रस्तुते कार्यकारणविपर्ययाभावात्सङ्गमनाभावः। एवं काव्यप्रकाशोक्तं लक्षणमत्र नाश्रीयते।

**शार्दूलविक्रीडितं छन्दः।**

( ४२ )

**निर्वाणानन्देति।** हे राधे ! ते स्मितानि कृपामृतस्वरूपीणि मन्दस्मितानि नस्त्रायन्तामिति योजना। ननु कीदृशि तानि स्मितानीत्याह—निर्वाणस्यापवर्गस्वरूपानन्दस्य परमसुखस्वरूपब्रह्मानन्दस्य वा य आनन्दकन्द आनन्दाङ्कुरस्तस्मात्प्रसृमरः प्रसर्पणशीलो यः परमानन्दस्तस्य यो निष्यन्दो निश्च्योतितो द्रवस्तं वर्षितुं शीलं येषां तानि। यदा यदा श्रीराधा मन्दं मन्दं विहसति, तदा तदा परमानन्दस्वरूपस्यानन्दकन्दस्य श्रीकृष्णस्य सकाशात्समन्तात्प्रसर्पतां परमानन्दनिष्यन्दद्रवकणानां वृष्टिः सम्पद्यते। वृष्टौ च राधिकास्मितान्येव निमित्तम्। वैष्णवपरम्परायां भगवतः श्रीकृष्णस्य आनन्दकन्दरूपेणोपस्थापनं सर्वथा विदितमेव समेषां धीजुषाम्। यद्वा, निर्वाणशब्देन नाभिदेशे जप्यपुटितमूलमन्त्रग्रहणम्। "मणिपूरे तु निर्वाणं महाकुण्डलिनीमधः" इति हलायुधकोषविवृतिव्याख्योद्धृतागमतत्त्वविलासस्य प्रामाण्यात्। मूलमन्त्रेण तु श्रीगोपालमन्त्रस्य ग्रहणं बोध्यम्। एवं नाभिदेशे मूलमन्त्रस्य यथाविधि जपेनानन्दकन्दस्य श्रीकृष्णस्य ध्यानावस्थायां साक्षात्कारः। ततश्च तत्तादृशेन प्रसर्पता परमानन्देन भक्तस्याप्लावनम्। यत्र चानन्दद्रवो निरन्तरं प्रवर्षति। अस्मिन् वर्षणकर्मणि राधिकायाः स्मितं हेतुत्वेनोपस्थापितम्। एवं मूलमन्त्रस्य जपेनापि तदेव भगवत्साक्षात्कारो यदा श्रीराधिकाकृपाकटाक्षावलम्बः शरणम्। अतः सिद्धान्तपक्षे, जपकाले राधाकृष्णयोर्युगपद् ध्यानं स्वीक्रियते। राधानामोच्चारणानन्तरं कृष्णनामोच्चारणविधिश्च यथा ब्रह्मवैवर्त्तपुराणे श्रीकृष्णजन्मखण्डे द्विपञ्चाशत्तमेऽध्याये—"आदौ राधां समुच्चार्य पश्चात्कृष्णं विदुर्बुधाः।"

अपि च, उद्यत् यत्सौन्दर्यं लावण्यं तदेव दुग्धाब्धिः क्षीरसागरस्तस्मादुदिता या रससुधा रागरसामृतं तस्या य आसारो धारासंपातवर्षणं तदर्थं दिव्यार्णवानीव दिव्यानन्तसागरोपमानीत्यर्थः। यदा भगवती राधा विहसति, तदा तस्या लावण्यमतिशयितं प्रवर्धते। अस्माल्लावण्यक्षीरसागरादनुरागरसामृतस्य धारासंपातवर्षणमारभ्यते, तदर्थञ्चेतानि स्मितानि दिव्यमहार्णवरूपेण परिकल्पितानि कविना। दिव्यमहार्णवानामर्णांसि कदापि न शुष्यन्तीति पीयूषवर्षणस्य चिरन्तनत्वं द्योत्यते। अपि च, स्वैरः स्वच्छन्दो यः श्याम एणः कृष्णमृगस्तस्य यत् कामभ्रमणं यादृच्छिकी पर्यटनवृत्तिस्तस्य नियमने बलाद्वशीकरणेऽमोघजालानि त्रिकालाबाधितसाफल्यपाशरूपाणीत्यर्थः। अत्र कृष्णमृगस्य व्याजेन

श्रीकृष्णस्य ग्रहणं श्यामत्वात् । यथाऽरण्ये कञ्चित्स्वच्छन्दं पलायमानं कृष्णमृगं रुरुत्सुर्जनो जालपाशं प्रयुङ्क्ते, तथैव गोपीषु स्वच्छन्दं क्रीडापरायणं श्रीकृष्णं वशीचिकीर्षू राधा स्मितानि प्रयुङ्क्ते । यथा जालपाशस्य रचना रज्जुतन्तुभिः सम्पाद्यते, तथैव राधिकास्मितानां रचना परमानन्दकिरणतन्तुभिः कृतेवोत्प्रेक्षिता । अथ, प्रियतमस्य श्रीकृष्णस्य हृदयाकर्षणे समावर्जनव्यापारे कार्मणानि वशीकरणमन्त्रबीजानीव नस्त्रायन्तां गोपायन्तु ।

कर्मैवेत्यर्थे 'तद्युक्तात्कर्मणोऽण्' पा० ५, ४, ३६, इत्यनेन सूत्रेणाणि प्रत्यये कृते सति कार्मणशब्दस्य निष्पत्तिर्बोध्या । दूतवाक्यं श्रुत्वा तथैव यत्क्रियते तत्कार्मणम् । वाचिकं श्रुत्वा क्रियमाणं कर्मेत्याशयः । वशीकरणकर्मणि मन्त्रतन्त्रादियोजने च शब्दस्यास्य प्रयोगो नयनगोचरतामापतति शास्त्रेषु । यथाहि—"चाटु चाकृतकसंभ्रममासां कार्मणत्वमगमन् रमणेषु" शिशुपालवधम् १०, ३७, १ । प्रस्तुते च यथा वशीकरणदशा मन्त्रतन्त्रादिप्रयोगे व्यापृते सति प्रयोगविषयीभूतो जनस्तत्कालमेव प्रयोगकर्त्तुर्वशंवदतां प्रयाति, तथैव राधिकास्मितवशीकरणबीजमन्त्रप्रयोगविषयीभूतं श्रीकृष्णान्तःकरणं सर्वथा विधेयीभवति ।

**अयम्भावः** । अस्मिन् पद्ये भगवत्याः श्रीराधिकाया मञ्जुलभावभावितानि स्मितानि चतुर्धा संवर्णितानि । प्रथमं तु स्मितदर्शे श्रीकृष्णात्मक आनन्दकन्दः प्रस्फुटति । ततः परिस्फुरतां परमानन्दस्य द्रवबिन्दूनां सततं संवर्षणे हेतुत्वम् । राधिकायाः स्मितेनाधिकतरं रुचिरो लावण्यदुग्धार्णवः समुदेति । तस्मान्निरन्तरं रससुधाया आसारस्त्रिलोकीं पुनाति । अस्मिन्नासारे चिरन्तनत्वं सन्निधत्ते । तत्र चाक्षुण्णमहासागरकल्पानि राधिकास्मितानि निमित्तम् । यदा श्रीराधा स्मितानि करोति, तदा धावल्यपूर्णानि तानि क्षीरसागरसमुद्भूतसुधाधारावर्षुकालौकिकार्णवा इव प्रतिभासन्ते । तृतीयस्मिन् विशेषणे कृष्णमृगेण सह श्रीकृष्णं तुलयति ग्रन्थकारः । कृष्णमृगो ह्यतीव चञ्चलप्रकृतिको भवति । तस्य वशीकारो नूनं कठिनतमो व्यापारः । तदर्थं केनचिद् द्रढीयसा जालेन भाव्यम् । तथैव लीलानटवरवपुः श्रीकृष्णोऽपि निसर्गत एव चञ्चलः । यदास्य मनो गोपवल्लवीषु प्रसक्तं भवति, तदा राधिकास्मितान्येवामोघजालायन्ते । नितान्तं मधुरेयं कल्पना । लोके हि पुरुषस्वभावोऽयं यत्सामान्यरूपेण पुरुषाः सौन्दर्यदिदृक्षया स्वैरं नेत्राणि प्रयुञ्जते, तथैव लीलापुरुषोत्तमः परमरसिको भगवानपि कदाचिद् गोपबालासु स्वीये लोचने भ्रामयेन्नामेति तदीयलोचनयोर्नियमनं सर्वथावश्यकम् । तच्च राधिकास्मितजालपाशेन क्रियते, इति हन्त निगडितोऽयं श्यामहरिणश्यामः श्यामो जयति । एतादृशि तानि स्मितानि तुरीयविशेषणे कविधिया प्रेष्ठस्य चित्ताकर्षणे वशीकरणमन्त्रबीजायन्ते । यो हि नाम स्वयं नवनीतचौरः, गोपरमणीचित्तचौरः,

तस्यापि चित्तं वशीकरणमन्त्रबीजायमानानि राधिकायाः स्मितानि चोरयन्तीति महदाश्चर्यम् ।

अत्र, आनन्द-कन्द-परमानन्द-निष्यन्देतिपदेषु निरतिशयं मधुरोऽनुप्रासो विलसति । दीर्घप्रदीर्घसमासयोजनायामप्येतादृशी वैदर्भी रीतिः, क्वचिद् गौडी रीतिः, क्वचित् 'शब्दार्थयोः समं गुम्फं' प्रदर्श्य पाञ्चाली रीतिर्ग्रन्थकारैरत्यन्तमेव सरसया सरण्या प्रतिपादिता ।

**रूपकालङ्कारः** । स्मितेष्वमोघजालत्वस्य, कार्मणत्वस्य, दिव्यार्णवत्वस्य च समारोपाद् रूपकालङ्कारः । **हेतूत्प्रेक्षालङ्कारश्च** । परमानन्दवर्षणकर्मणि राधिकायाः स्मितस्य हेतुत्वेनोत्प्रेक्षणात् । रूपकोत्प्रेक्षयोश्चाङ्गाङ्गितयाऽङ्गाङ्गि-भावसङ्करालङ्कारश्च ।

**स्रग्धरा छन्दः** ।

( ४३ )

**पीयूषासारेति** । हे भगवति राधे ! पीयूषस्य य आसारो वेगमयी वृष्टि-स्तत्र प्रभविष्णुर्यो नीलो नीलेन्दीवराभोऽमृतधरः सुधाभरो रुचिरः सुन्दरोऽपाङ्गो नेत्रप्रान्तभागस्तस्य पातास्पदं मां कुरु कृपया तव कटाक्षं मयि पातयेत्येव केवलं त्वामहमर्थये प्रार्थये । √अर्थ उपयाञ्चायामित्यत्र "आगर्वादात्मनेपदिन" इति वलान्नित्यमात्मनेपदित्वं बोध्यम् । अमृतधरेति पदस्य तु धरतीति धरः—पचा-द्यच्, अमृतस्य धरोऽमृतधर इति व्युत्पत्तिर्बोध्या ।

ननु नास्ति तवैतावान् पुण्यसञ्चयो येन राधिकालोचनगोचरत्वं गच्छे-रित्यत आह—औदार्यसिन्धोरौदार्यसागररूपायास्तव कृत इदं त्वच्चरणाश्रितं मां कटाक्षेणालोकनमात्रमिह प्रार्थनाविषये कियद् देयम् ? न किमपि देयमित्या-शयः । अपि च, अत्रास्मिन् जगतीतलेऽन्यन्न किमपि प्रार्थनीयम् । त्रिलोकैश्वर्य-मपवर्गमन्यद्वा किमपि वस्तुजातं सर्वथा निराकरिष्णुः सन् केवलं त्वल्लोचनगो-चरविषयं जिगमिषुर्वर्त्ते । तथाप्यत्राप्यस्मिन्विषये यदि त्वं मौनं भजसि तूष्णी-मवलम्बसे चेत्तदा किं करोमि, क्व यामि, कस्य वान्यस्य शरणं प्रपद्ये । तत् हे भगवति ! प्रसीद, प्रसीद ।

**अयम्भावः** । राधाराधनधनो हि भक्तः केवलं स्वेष्टदेवताया एकस्यापि कटाक्षस्य परिधौ गन्तुमीहते । द्रढीयान् खल्वयं कवेः प्रत्ययो यत्सुधापरिप्लुताद् राधिकापाङ्गात्सततं सुधानिर्झरिणी प्रस्रवति । अयमेवैकाकी मनोरथो भक्तस्य कदाचित्प्रसन्नायां सत्यां भगवत्याम् । यदि नाम तादृक्सुकृतसञ्चयाभावेऽधिका-राभाव इति चेत्तथापि पूर्यतामयं मनोरथः, यतो हि औदार्यसागररूपायास्तवा-

नेन न किमपि हीयते । सति तादृक्सुकृतसञ्चये तु निसर्गत एव ध्रुवस्तव कृपा-कटाक्षभावः, यदि तदभावेऽपि समुपलब्धिः स्यात्तदैव नूनमौदार्यसिन्धुरूपत्वमिति विशेषणं युज्यते । अपि च, यथानन्तैश्वर्यशालिनः कश्चिदर्थी दश मुद्रा अप्युपलभ्य स्वात्मानं धन्यं मनुते, न चैश्वर्यशालिनस्तावता कापि न्यूनता । तथैव मामपि परिकलय । उत्तरार्धे तु ग्रन्थकारेण यत्सर्वं निराकृतं तत्सर्वथा भागवत-परम्परानुगतम् । यथाहि —

**"न नाकपृष्ठं न च सार्वभौमं न पारमेष्ठ्यं न रसाधिपत्यम् ।**
**न योगसिद्धीरपुनर्भवं वा वाञ्छन्ति यत्पादरजःप्रपन्नाः ॥"**

श्रीमद्भागवतमहापुराणम् १०,१६,३७ ।

लोकेऽपि यदा कश्चिद् वनीयको दातारं याचते, तदा दाता प्रथमक्षणे मौनमवलम्बते । द्वितीयक्षणे तु धनदानचिन्तार्त्तः सन् नेत्रे निमीलयति, न च तं द्रष्टुं कामयते । तथैव राधिकाप्युपयाचिता सती मौनं भजति । नयने च निमील्यात्मनो विचारान्तरविचारव्यासक्ततया समयाभावं द्योतयतीति योजना । हे राधे ! याचनरूपकारणाभावेऽपि कथं मौनावलम्बनं नेत्रनिमीलनञ्च । अतः कृपया मामालोकय ।

अत्र √भज् सेवायामित्यस्योभयपदिनो धातोः परस्मैपदस्य प्रयोगाच्छ्री-राधाया मौनं भक्तस्य कृते, न तु स्वात्मनः कृत इति ध्वनिः ।

**रूपकालङ्कारः ।** राधिकायामौदार्यसिन्धुत्वस्य समारोपणाद् रूपका-लङ्कारः ।

**स्रग्धरा छन्दः ।**

( ४४ )

**धर्म्याचारेति ।** हे राधे ! धर्मादनपेतो धर्म्यो य आचारः श्रुतिस्मृति-पुराणप्रतिपादिताचरणपथो विचारश्च तच्चिन्तनपथश्चेति धर्म्याचारविचारौ तयोर्वर्जनेनोपेक्षया कदाचित्कदाचित्परित्यागेन यन्महापापं तस्य यदर्जनं तस्या-लोकनेन दर्शनेन प्रोद्यन्नुत्पद्यमानो यः कोपस्तेन कषायितं कुवरितं यदात्मदयि-तस्य स्वप्रियस्य राधिकाप्रियतमस्य स्वान्तोदकं हृदयस्थं भावात्मकं जलं तस्य स्वच्छतां निर्मलतां याचामहे प्रार्थयामहे ।

ननु श्रीकृष्णान्तःकरणभावनीरकषायीकरणे त्वच्छास्त्रविरोध्यसदाचरणस्य हेतुत्वात्त्वमेव निर्मलीकरणे प्रयतस्वेत्यत आह—श्रीराधे ! महदागो येषां तादृशा महापराधिनो वयं तज्जनयितुं न क्षमाः । अतः, कतकवदाचरितेति कतकायिता,

सा चासावुक्तिरचना वाग्व्यापारो यस्यास्तादृशीं त्वामेव तथानुष्ठातुं याचामहे। त्वद्वाग्विन्यासेन स्वत एव तज्जलं स्वच्छतां प्रयास्यतीत्यर्थः।

**अयमाशयः।** 'आचारः परमो धर्मः' इति बुद्ध्याऽऽचारभीरुः कविर्भगवती श्रीराधिकां स्तौति। नैकविधगार्हस्थ्यकार्यान्तरव्यापृततया जठरपिठरीपरिपूरणैकमनसो मम कदाचिदाचारविचारविषयको विधिरप्युल्लङ्घितो भवेन्नाम। अनेन महापापेन भगवतो मह्यं महीयान् कोपः प्रादुर्भूतः। कोपेन च श्रीकृष्णहृदि सततं विद्यमानं कृपाजलं भावजलं वा कषायितम्। अतएव मयि वैरस्यम्। येन नाधुना साक्षात्कारः। कषायितस्य कृपाम्बुनो निर्मलीकरणे नाहं कल्पो महापराधित्वात्। अतो राधिकां याचे। ननु कथं राधिका निर्णेनेवतीति चेदाह—तस्याः सविधे कतकबीजरूपिण्येकौषधिर्वर्वृतीति। कतकफलञ्च पयःप्रसादि जलनिर्मलकारकञ्चेति प्रसिद्धिः। यथाहि—

> **"फलं कतकवृक्षस्य यद्यप्यम्बुप्रसादकम्।**
> **न नामग्रहणादेव तस्य वारि प्रसीदति॥"** मनुस्मृतिः ६, ३७।

प्रस्तुते च राधिकायाः श्रीकृष्णेन सह प्रियालापरूप एव कतकः। राधिकाया उक्तिः कतकायिता, श्रीकृष्णस्य चित्तजलञ्च कषायितम्। यथा कतकफलचूर्णस्पर्शमात्रेणैव मलिनमम्बु निर्णिक्तं भवति, तथैव राधिकालापकतकचूर्णेन श्रीकृष्णस्य कोपकषायितं कृपाजलं निर्णिक्तं स्यादिति हे राधे! वयं त्वां प्रसादयामः। त्वञ्चास्मत्कृते श्रीकृष्णं प्रसादयेति भावः। एवं राधिकाप्रसादनमन्तरा श्रीकृष्णोपासना नार्थक्रियाकारिणी भवतीति ध्वनितम्। 'धर्म्ये'त्यत्र धर्मादनपेत इत्यस्मिन्नर्थे "धर्मपथ्यर्थन्यायादनपेते" पा० ४,४,९२ इत्यनेन यत्प्रत्ययः। दयितशब्दस्य श्रीकृष्णार्थे प्रयोगस्तु यथा—

"दयित दृश्यतां दिक्षु तावकास्त्वयि धृतासवस्त्वां विचिन्वते।" श्रीमद्भागवतमहापुराणम् १०,३१,१। 'याचामहे' इत्यत्र धातोरात्मनेपदे प्रयोगेण भक्तः स्वात्मनः कृते याचते, न तु कस्मैचिदप्यन्यस्मै।

**व्यज्गोपमालङ्कारः।** कतकायितोक्तीत्यत्र।

**शार्दूलविक्रीडितं छन्दः।**

( ४५ )

**मुक्ताविद्रुमेति।** हे राधे! अत्र खञ्जनवन्मञ्जुलेऽञ्जनेन लसन्ती ये त्वल्लोचने तयोरन्ते परिसरे स्फुरन्तश्चञ्चद्द्विरेफा इव नीलेन्द्रोपला इन्द्रनीलमणयस्तैर्विनिर्मिते पञ्जरे करुणाकीराङ्गनाऽनुकम्पानाम्नी शुकरमणी क्रीडति विहरति।

कीदृशे पञ्जरे इति चेदाह—मुक्तानां शौक्तिकेयानां विद्रुमरत्नानाञ्च रोचिभिः कान्तिभिः (सहितं) अजिरं प्राङ्गणं यस्य तस्मिन्। (रोचिःसहितेऽजिर इति रोचिरजिर इति मध्यमपदलोपी समासः)। अपि च, माणिक्यरत्नानां प्रभया त्विषोन्मीलन्त्यः प्रकाशपथमागच्छन्त्यो दाडिममध्यबीजगुलिका दाडिम-फलबीजगुटिकास्ताभिः शोणोऽतीव रक्त इत्यत एवातिरम्यश्चित्ताकर्षकोऽन्तरो मध्यभागो यस्य पञ्जरस्य तस्मिन्। लोकेऽपि महत्तमानां धनिकानां सहृदयाणां रसिकानां वा गेहाजिरे पञ्जरमध्ये शुको वा मेना वा परिपाल्यते। तत्र कीरस्य कीराङ्गनाया वा भोजनार्थं दाडिममध्यबीजकणा विकीर्यन्ते। प्रस्तुते च हे श्रीराधे! त्वं करुणैकपरायणा। मत्तः पराङ्मुखं भगवन्तं श्रीकृष्णं मम पक्षतः प्रसादय। त्वमेव नः शरणम्।

**अयम्भावः**। पद्येऽस्मिन् राधिकालोचनरूपकमेकं पञ्जरं प्रकल्पितमास्ते। यस्मिन् करुणानाम्न्येका कीराङ्गना निवसति। राधिकायाः श्रोत्रयोरवलम्बितेषु कर्णाभरणेषु खचितान्यासन्नरुणारुणानि माणिक्यरत्नानि। नासिकायाञ्चा-वलम्बितमासीन्मौक्तिकम्। गमनागमनवेलायामिमान्याभरणानि प्रेङ्खितानि भवन्ति। एवं यदा माणिक्यरत्नखण्डानामरुणाः कान्तिकिरणा नेत्रयोः पतन्ति, तदा कविरुत्प्रेक्षते यदहो न खल्विमानि माणिक्यरत्नानि (माणिक्यरत्नप्रति-बिम्बितानीत्याशयः), अपि तु करुणाकीराङ्गनाया भोजनार्थं पञ्जरे विकीर्णानि रत्नानि दाडिमबीजानीति। राधिकाया खञ्जनमञ्जुले नयने तावदञ्जनलसित आस्ताम्, तेन च परिसर इन्द्रनीलमणिमय इव प्रतिभासेते स्म। एवं नयनपरि-सरेऽञ्जनव्याजेनेन्द्रनीलमणिमये पञ्जरे करुणाकीराङ्गना कर्णालङ्कारखचित-माणिक्यप्रेङ्खणप्रसृतारुणकान्तिव्याजेन दाडिमबीजगुलिकाभ्यवहारपरायणेत्यहो कवेः कल्पनाचातुरीनदीष्णत्वम्। अत्रत्यौ द्वौ सार्धैकपङ्क्तिपरिमितौ प्रदीर्घसमासौ नूनमतीव हृदयावर्जकौ स्तः।

**रूपकालङ्कारः**। करुणायां कीराङ्गनारोपात्।

**शार्दूलविक्रीडितं छन्दः**।

( ४६ )

**माणिक्योपलेति**। पद्येऽस्मिन् ग्रन्थकारो राधिकानयनात्मकं रक्तवसनं तापसं प्रणमति। नयनतापसयोर्धर्मगुणानां साम्यमतीव मनोहारिण्या सरण्या प्रतिपादितम्। यथाहि—हे राधे! ते तवाक्षि नयनमेव यतिस्तस्मै तेऽक्षियतये नयनतापसायास्मदीया नतिरस्माकं प्रणामाञ्जलिः। ननु कीदृशोऽयं यतिरित्यत आह—माणिक्योपलमये माणिक्यमणिखचिते ये कुण्डले कर्णाभरणे तयोर्या अंशु-

लहर्यः किरणतरङ्गास्तासामंशुलहरीणां प्रेङ्खोलनात्कम्पनाद् गैरिकं गिरिजरक्त-मृद्रञ्जितं वासो वसनं दधते धारयते। यतिपक्षे तु यथा लोके कश्चिद् निर्जि-तेन्द्रियग्रामो यतिर्गैरिकेण वासश्चिह्नेन स्वकीयं यतित्वं प्रख्यापयति; राधिकानयनरूपो यतिरपि। रक्तमाणिक्यखचितकुण्डलमयूखोत्थप्रकम्पनाद् यद्रक्तं प्रतिबिम्बं पतति तदेवाक्ष्णोर्गैरिकं वास इत्याशयः। अपि च, अञ्जना-श्रयतया कज्जललेखाश्यामलिम्नः कारणेन वैराग्यमाबिभ्रते रक्तिमवर्णशून्यत्व-मासमन्ताद् धारयते। यतिपक्षे, यतिर्वैराग्यं भजते, सर्वविधसांसारिकपुत्रकल-त्रादिविषयकरागपरित्यागात्। वैराग्यशब्दस्य द्विधा व्युत्पत्तिः। यतिपक्षे विगतो रागो मोहस्नेहपाश इति विरागस्तस्य भावो वैराग्यम्। अक्षिपक्षे तु विगतो रागो रक्तिमेति विरागस्तस्य भावो वैराग्यमिति। राधिकानयनयोस्त्वलौकिकसुषमा-निधी रक्तिमा नयनसौन्दर्यस्य पराकाष्ठामातनोति, तथापि प्रस्तुतेऽञ्जनं तादृशं रक्तिमानं स्वान्तर्दधातीत्यञ्जनेन कारणेन लोहितवर्णशून्यत्वान्नयनपक्षे वैराग्यं बोध्यम्। अपि च, श्रुत्यन्तः कर्णान्तो योऽध्वा पन्थास्तस्मिन्विहरतीति श्रुत्यन्ता-ध्वविहारी तस्मै। यतिपक्षे श्रुत्यन्तो वेदान्तस्तस्याध्वा तस्मिन् विहरतीति तस्मै। यतिस्तु वेदान्तशास्त्रस्य श्रवणमनननिदिध्यासनादिषु मार्गेषु रात्रिन्दिवं विहरति। अक्षिपक्षे, अक्षिणी ह्येतादृशे विशाले यत्ते कर्णाभ्यर्णपर्यन्तं विस्तृते स्तः। अपि च, तव श्रीराधाया नसोवंशेन नासिकाया वंशेन सन् शोभनो दण्डो-ऽस्यास्तीति सद्दण्डी तस्मै। यतिपक्षे, यतिः सर्वदा दण्डं हस्ते धारयति। अक्षि-पक्षे, अक्षियतिरप्यतीव शोभनं नासादण्डं धारयति। अक्षिणी हि तावन्नासि-काया उपरि स्थिते स्तः। अथ च, विक्षेपादिष्वरतायाननुरक्तायेत्यर्थः। विक्षेप-स्तावद् विषयस्फुरणमखण्डवस्त्वनवलम्बनेन चित्तवृत्तेरन्यावलम्बनं वा। यति-पक्षे, यतिश्चित्तवृत्तिनिरोधेन विषयेष्वनासक्तः सन् विक्षेपप्रभृतिषु दोषव्यासङ्गेषु सर्वथाऽसक्तो भवति। अक्षियतिपक्षे त्वियं कल्पना यथा यतिर्नेत्रनिमीलनाद् ध्यानावस्थायां विद्यमानः, अतएवेतस्ततो दृष्टिनिक्षेपविक्षेपाभावः। यदाक्ष्णो-र्यतिरूपत्वं तदैतदपि सर्वथा नैसर्गिकं प्रतिभाति यदियं स्तुती राधिकाया ध्यान-स्थयोर्लोचनयोः स्यात्। तादृशायाक्षियतयेऽस्मदीया नतिः।

**अयम्भावः।** लोके हि यतिर्गैरिकं वासः परिदधाति, वैराग्यमाबिभर्त्ति, श्रुत्यन्ते वेदान्तेऽध्वनि भागे विहरति, दण्डं हस्ते धारयति, विक्षेपादिषु चारतो भवति। तथैव राधिकानयनयतिसमुपस्थापनादतीव सरसेयं कल्पना।

समस्तवस्तुविषयको रूपकालङ्कारः। तद्यथा माणिक्यमणिकुण्डलांशुल-हरीरूपकं गैरिकं वासः, अञ्जनरूपकं वैराग्यम्, श्रुत्यन्तरूपोऽध्वा, नसो वंश-

रूपो दण्डः, एतानि सर्वाण्यवयवरूपाणि, प्रधानरूपकञ्चाक्षिरूपो यतिः। तल्लक्षणं यथा काव्यप्रकाशे—"समस्तवस्तुविषयं श्रौता आरोपिता यदा।"

**शार्दूलविक्रीडितं छन्दः।**

( ४७ )

**श्रीराधे तवेति।** हे श्रीराधे ! तव लावण्यचरमसीमायाः मन्दहासस्य मन्दस्मितस्य विशदान्यतीव निर्मलानि यानि ज्योतींषि रश्मयस्तेषां छटाभिः परम्पराभिः सह चन्द्रमसः सङ्गरे युद्धे समारब्धे सति विष्टपरोचनोऽपि विष्टपं भुवनं रोचयति प्रकाशयतीति जगत्प्रकाशकोऽपि रजनीकान्तः पीयूषमहा जितः पराजितः। "अथो जगती लोको विष्टपं भुवनं जगत्", अमरकोषः २, १०, ६। यदा भगवती राधा मन्दं विहसति तदा हास्यस्य धवलत्वात्ततः प्रादुर्भवतां ज्योतिषां धवलतरत्वात्तेषां छटानाञ्च धवलतमत्वं विद्योतते। सुधांशुरपि स्वकौमुदीकिरणजालप्रद्योतितत्रिभुवनान्तरालो नूनं गर्वमावहतिस्म, स्वतेजःकान्तिप्रसरेण हेतुना, किन्तु राधिकामन्दस्मितप्रसर्पत्कौमुदीकिरणजालगतधावल्यदर्शमतीव विस्मितः सन् योद्धुं प्रावर्त्तत। यत्र च सुधांशोर्निर्णीतः पराजयः। मन्ये इत्युत्प्रेक्षा। सोऽयं पराजितश्चन्द्रः श्रीराधिकाचरणाश्रितः सन्, सभयं भयेन सहितं यथा स्यात्तथा, प्रकर्षेण कम्पमाश्रयत इति प्रकम्पाश्रयी निरन्तरं कम्पमानो नासाया अग्रे मुक्ताफलस्य मौक्तिकस्य व्याजेन छद्मनाऽभययाचनं रचयते अभयं याचते।

**अयम्भावः।** यदा चन्द्रो राधिकायाः स्मितचन्द्रिकया स्वीयां चन्द्रिकां सर्वथा नगण्यां गणयति, तदा कीदृशीं दुरवस्थां प्रपद्यत इति मञ्जुलया रीत्यात्र समुत्प्रेक्षितम्। यथाहि प्रथमं तु विजेत्र्या राधिकायाः शरणं गत्वा नासामुक्तामणिरूपेण धृतविग्रहोऽभयं प्रार्थयते। लोकेऽपि पराजितो जनो विजयिनमभयं याचते। अपि च, कीदृशः खलु दण्डो निश्चीयेत विजेत्र्येति भावेन भयान्वितत्वम्, तेन च सततं सकलकलेवरव्यापी वेपथुः प्रादुर्भवति। नासामुक्तामणिरपि नासाग्रवर्त्तित्वान्निरन्तरं वेल्लति।

**अपन्हुतिगर्भोत्प्रेक्षालङ्कारः।** नासाग्रमुक्ताफलव्याजेनेति पदेऽपन्हुतिः। प्रकृतमुपमेयं चन्द्रं प्रतिषिध्याप्रकृतमन्यदुपमानं नासाग्रमुक्ताफलं स्थाप्यते। व्याजमिषच्छलच्छद्मादीनामेकतमस्य व्याजशब्दस्यापन्हुतिव्यञ्जकत्वम्। तल्लक्षणं यथा—"प्रकृतं यन्निषिध्यान्यत्साध्यते सा त्वपन्हुतिः"। काव्यप्रकाशः १०, १०। चन्द्रकर्त्तृकमभययाचनञ्चात्रोत्प्रेक्षितमित्यपन्हुतिगर्भ उत्प्रेक्षालङ्कारः।

**शार्दूलविक्रीडितं छन्दः।**

( ४८ )

**राधे तवेति ।** हे राधे ! तवाह्वयस्य नाम्नो लवान्वयतोऽपि लेशमात्रस्यापि सम्बन्धेन तर्वादिष्वपि वृक्षादिष्वप्यतुला या मङ्गलसम्पच्छुभैश्वर्यं तस्या ओघः समूह उदेति प्रादुर्भवति, तर्हि राधाचरणाश्रितानां रात्रिदिवं श्रीराधाया नामकीर्त्तनव्यसनिनां रसिकानां सम्पद्विषये किं वक्तव्यम् । ननु राधानाम्न आंशिकेनापि सम्बन्धेन वृक्षेषु कुतोऽतुलसम्पत्संयोग इति चेदत्र चतुर्णां वृक्षाणां निदर्शनरूपेणोपस्थापनमवलोक्यते । तद्यथा—वृन्दा, बिल्वतरुः, आमलकी, दूर्वा चेत्यादीनि विश्वमहितानि जगतीतले सर्वत्र संपूजितानि निदर्शनान्युदाहरणानि विद्यन्ते । तथाहि, वृन्दाशब्दस्य तुलसीति पर्यायः । नामद्वयेऽपि "रलयोर्डलयोर्न भिदि"ति व्याकरणशास्त्रनियमेन श्रीराधानामांशे रेफयोगाज्जगत्पूज्यता । तुलसीति पदस्य तु तुलां सादृश्यं स्यति नाशयतीति व्युत्पत्तिः शब्दकल्पद्रुमे प्रदर्शिता । सर्वोत्तमत्वात्सादृश्याभावत्वाच्चास्यास्तथात्वम् । गरुडपुराणे, पद्मपुराणे, ब्रह्मवैवर्त्तपुराणे च तुलस्या असाधारणमहत्त्वप्रतिपादनात्, श्रीहरिभक्तिविलासे च तुलस्याः श्रीकृष्णेन सह विवाहविधेः श्रीकृष्णमन्दिरे च प्रतिष्ठाविधेर्विद्यमानत्वान्मूर्धन्यत्वम् ।

बिल्वेपीति । बिल्वशब्दस्य चत्वारः पर्यायाः सन्ति । "बिल्वे शाण्डिल्यशैलूषौ मालूरश्रीफलावपि", अमरकोषः २, ४, ३२, इत्यमरप्रामाण्येन लकारात्मकरेफयोगाद् विश्वपूज्यता । "वनस्पतिस्तव वृक्षोऽयं बिल्वः" इति महालक्ष्म्याङ्गीकृतत्वञ्चास्ते ।

एवमामलक्या अपि । "धात्री चामृता तिष्यफला त्वामलकी त्रिषु" इति कोशाद् रयोगात्पूज्यत्वम् । सर्वमङ्गलप्रदत्वञ्च धर्मशास्त्रेपु स्मर्यते—

**"नित्यमामलके लक्ष्मीर्नित्यं हरितगोमये ।**

**नित्यं शङ्खे च पद्मे च नित्यं शुक्ले च वाससि ।"** तिष्यं मङ्गल्यं फलमस्या इत्यमरटीकायां भट्टोजीदीक्षितात्मजभानुजीदीक्षितव्याख्यानम् । अपि च हलायुधकोषविवृतौ—

**"तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।**
**श्रीकामः सर्वदा स्नानं कुर्वीतामलकैर्नरः ॥"**

दूर्वायास्तु—"मङ्गला सितदूर्वाया"मिति मेदिन्यनुसारेण माङ्गलिकत्वं स्फुटमुदीर्यते । अमरकोषे चापि,

**दूर्वा तु शतपर्विका ।**
**सहस्रवीर्या मार्गव्यौरुहानन्ताथ सा सिता ।**
**गोलोमी शतवीर्या च गण्डाली शकुलाक्षकः ॥**

अमरकोषः २, ४, १५८-५९,

इति तन्नामसु रेफश्रवणादेव सर्वदेवशिरोधार्यत्वम् । गरुडभविष्यपुराणयोः प्रामाण्येन भाद्रशुक्लाष्टम्यां दूर्वाष्टमीव्रताचरणस्य निर्देशात्तद्वैशिष्ट्यम् ।

एवं स्पष्टमास्ते यद् राधानाम्न आंशिकेनापि सम्बन्धेन वृक्षेष्वलौकिकी सम्पत्प्रादुर्भवति । अतएवोक्तं ब्रह्मवैवर्त्ते श्रीकृष्णजन्मखण्डे द्विपञ्चाशत्तमेऽध्याये—

**राशब्दोच्चारणादेव स्फीतो भवति माधवः ।**
**धाशब्दोच्चारतः पश्चाद् धावत्येव ससंभ्रमः ॥**

वसन्ततिलका छन्दः ।

( ४६ )

**नैदाघार्त्तीति** । हे राधे । सा लोकालोकयित्री सुप्रसिद्धेन्दोश्चन्द्रमसश्चन्द्रिका तु केवलं साधारणीं कोटिं गाहते, किन्तु तव वदनेन्दोः स्मितचन्द्रिका सर्वोत्कर्षेण वर्तते । ननु कीदृशीयं शुभ्रांशुकौमुदीत्याह—निदाघस्य ग्रीष्मकालस्येयमिति नैदाघी याऽऽर्त्तिः पीडा तस्याः प्रशमनेन वित्तेति नैदाघार्त्तिप्रशमनचणा ग्रीष्मतापनिवारणनिपुणा । लोकेऽपि ग्रीष्मर्त्तौ ललाटन्तपचण्डांशुप्रखरतापपरिदेवितानां तापपीडानिवृत्तावतीव चतुरेयं चन्द्रिकेति प्रथमं वैशिष्ट्यम् । अपि च, वियुक्तानां प्राणिनामुत्तापस्य प्रथने विस्तारे निरता संलग्ना । लोकेऽपि प्रियतमविरहकर्शिता जनाश्चन्द्रज्योत्स्नया भृशं परितप्यन्ते, विरहोद्दीपनभावरूपाया ज्योत्स्नायाः संतापवृद्धौ हेतुत्वात् । चन्द्रकान्तिः प्रियजनवियुक्तप्राणिनामुत्तापिकेति सुविदितं तत्त्वविदाम् । अपि च, कोकाश्चक्रवाकास्तेभ्यः शोकप्रदा शोकदात्रीयं चन्द्रिका । चन्द्रोदये हि चक्रवाका अस्रयन्ति, आसन्नायां रजन्यां दम्पत्योः पारस्परिकविरहस्यावश्यं सम्पत्स्यमानत्वात् । एवं प्रतिनिशं चन्द्रचन्द्रिकां दर्शं दर्शं कोका बिभ्यति वाष्पायन्ते च । अतएवात्र चन्द्रिका कोकेभ्यः शोकप्रदा कथिता ।

एवं लोकप्रसिद्धायाश्चन्द्रिकाया विशेषणत्रयेण वैशिष्ट्यं प्रतिपाद्य राधिकावदनेन्दुस्मितचन्द्रिकां वर्णयितुमुपक्रमते—हे राधे ! इयं तवानिर्वचनीया मन्दस्मितरुक् मन्दहास्यकान्तिश्चकास्ति भ्राजते । प्रस्तुते हि राधिकावदनं चन्द्रः, स्मितकान्तिश्च तस्य चन्द्रिकेत्यनुसन्धेयम् । इयं हि स्मितकान्तिचन्द्रिकेन्दोश्चन्द्रिकाया अधिकतरं राजत इत्याशयः । यथाहि, नृणां सर्वेषां प्राणिनां जन्मोद्भवः क्षयश्च विनाशश्चेति जन्मक्षयौ जन्ममृत्यू ताभ्यां यद्भयं भीतिस्तस्माद्या शुक् शोकस्तस्यास्ततः प्रादुर्भूतो य उत्तापस्तं हरति नाशयतीति । राधिकाननाब्जस्मितरुचिचन्द्रिकादर्शं सर्वेषां संसारिणां सांसारिकत्रिविधतापनिवृत्त्या जन्ममरणविषयकभयशोकोत्तापहरणं संपद्यते । अपि च, अनस्तास्तरहिता । इयं कान्ति-

चन्द्रिका कदापि नास्तं गच्छतीति स्वकीयं पटुतरत्वं प्रख्यापयति । अथ च, अखिलाह्लादिका त्रिभुवनाह्लादिनीति विशेषः । ईदृशी तव मन्दस्मितरुक् चकास्ति संशोभते ।

**अयम्भावः** । सा लोकप्रसिद्धा चन्द्रिका तु यद्यपि निदाघार्त्तानामार्त्ति-प्रशमयित्री, तथापि प्रियतमविरहकर्शितानां संतापवर्धयित्री । इयं राधिकावदन-सुधांशुस्मितकान्तिचन्द्रिका तु सकलप्राणिभयशोकतापहर्त्रीति विशेषः । सा चन्द्रिका त्वस्तं गच्छति,इयं सर्वदानस्ता सती विद्योतते । इयं राधिकाया वदन-कान्तिरूपिणी चन्द्रिका कदापि नास्तं गच्छतीति तस्या महद् वैशिष्ट्यम् । सा तु कोकशोकप्रदात्रीयं तावत् सकलाह्लादयित्रीति विशेषः ।

**व्यतिरेकालङ्कारः** । अस्तं गच्छन्त्या लोकप्रसिद्धायाश्चन्द्रिकाया अपेक्ष-यास्तमप्राप्नुवत्या राधिकावदनचन्द्रिकाया उत्कर्षप्रतिपादनात् । तस्या वियोगि-जनतापकर्त्तृरूपाया अपेक्षयास्यास्तापहर्त्तृरूपत्वादुत्कर्षः । तस्याश्चक्रवाकशोक-जनयितृरूपाया अपेक्षयास्यास्त्रिजगदाह्लादयितृरूपत्वात्समुत्कर्ष इति व्यतिरेकः ।

**मन्दाक्रान्ता छन्दः** ।

( ५० )

**कस्तूरीघनसारेति** । हे राधे ! ते स्मितस्य शुभ्रकान्तिरेव लहरी धवल-हास्यशुभ्ररुचिवीचिका भास्वत्सुतेव भासते विद्योतते । कीदृशीयं राधिकावदन-मन्दस्मितकान्तिलहरीत्याह—कस्तूरी मृगमदः, घनसारः कर्पूरम्, कुङ्कुमश्च घुसृणं केसरं वेत्येतेषां स्वकलेवरलेपितानां त्रयाणां सुगन्धितद्रव्याणां रुचा कान्त्या किर्मीरतां कर्बुरतां बिभ्रती धारयन्ती । भगवत्या राधया स्वकीये शरीरे श्याम-वर्णिकायाः कस्तूरिकायाः श्वेतजीमूतनिभस्य कर्पूरस्यारुणस्य च हरिचन्दनस्यानु-लेपोऽकारि । यदा यदा तस्या वदनसुधांशोर्धवलातिधवलज्योत्स्नामयी कान्ति-लहरी प्रवहति तदा तदा मृगमदकर्पूरकेसरलेपानां श्यामश्वेतारुणवर्णमयीभिः कान्तिभिः सह संभिश्रिता सती सा चित्रितेव प्रतीयत इत्याशयः । अपि च, अतिशयेन प्रियः प्रेष्ठः प्रियतमो यः श्यामो लीलानटवरवपुर्घनश्यामः श्रीकृष्ण-स्तस्य या तनुः शरीरं तस्याः प्रभायाः कान्त्या आस्पदतया निधानतया श्यामत्व-मातन्वती स्वीयं श्यामवर्णमयत्वं विस्तारयन्ती । अस्मिन्समये भगवती श्रीप्रिया राधा प्रियतमेन श्रीकृष्णेन सह परमानन्दसागरे निमग्नाऽऽसीत् । नवजलधर-वर्णस्य श्रीकृष्णस्य वपुषः प्रसर्पतः श्यामलिम्नः प्रवाहस्य कारणाद् राधिकायाः शुभ्रापि स्मितलहरी नूनमतिशयेन श्यामवर्णमयत्वं प्रख्यापयन्त्यासीत् । अपि च, हारस्थितैर्मौक्तिकैर्हंसानां सितपक्षाणां मानसौकसामालीभिः पङ्क्तिभिरवयं

सम्बन्धं विदधतीव कुर्वाणेव । हे राधे ! एतादृशी तव स्मितस्य शुभ्रकान्तिलहरी कालिन्दीरूपिणी सती भासते प्रतीयते ।

**अयम्भावः** । राधिकायाः स्मितस्य कान्तिलहरी पद्येस्मिन्मञ्जुलया रीत्या कालिन्दीवदुपस्थापितास्ते । कालिन्दी तावदनेकासामाभीरसुन्दरीणां परिलेपितानां कस्तूरीकर्पूरकुङ्कुमादिद्रव्याणां संयोगेन चित्रिता भवति । तथैवेयम् । यथा कालिन्दी स्वयं श्यामा भवति, तथैवेयं श्यामस्य श्यामकान्तिसम्पर्केण श्यामा । यथा कालिन्दी हंसालीपरिमण्डिता शुभ्रा, तथैवेयं हंसधवलमुक्ताफलग्रथितहारावल्या धवलधवला । यथा भास्वत्सुता श्यामत्वशुभ्रत्वकर्बुरत्वादिना भ्राजते तथैव राधिकास्मितकान्तिलहरी हारस्थमौक्तिकालोकसंवलितत्वेन शुभ्रा, श्यामसुन्दरस्य श्यामप्रभासंपर्काच्छ्यामा, स्ववपुर्लेपितानां कस्तूरिकादीनाञ्च प्रभया चित्रितेत्यर्थः ।

**उपमालङ्कारः** । स्मितशुभ्रकान्तिर्भास्वत्सुतेवेति विवक्षायाम् ।

**शार्दूलविक्रीडितं छन्दः** ।

## ( ५१ )

**अशेषनिधीति** । हे राधिके ! तव चलन्तश्चञ्चला अपाङ्गा लोचनप्रान्तभागा एव कल्पद्रुमाः कल्पवृक्षा जयन्ति सर्वोत्कर्षेण वर्त्तन्ते । यथा कल्पवृक्षाणामधस्तान्मनसि कल्पिताः सङ्कल्पास्तत्कालमेव फलन्ति, तथैव राधिकानयनप्रान्ताः कल्पवृक्षवदाचरन्ति । ननु कीदृशाः खल्विमेऽपाङ्गकल्पद्रुमा इत्यत आह— अशेषः सम्पूर्णो यो निधिः कुबेरस्य नवधारत्नकोशस्तस्य या सम्पद्विभवोत्कर्षस्तस्या उदये प्रादुर्भावे मूलबीजानां प्रधानबीजानामङ्कुरा अङ्कुरसदृशाः । लोकेऽपि केवलं प्रधानस्यैव बीजस्याङ्कुरोत्पत्तिर्भवति । एवं राधिकालोचनकटाक्षपातमात्रेणैव नवनिधिसम्पत्समुत्कर्षः सर्वत्र विकीर्णो भवतीत्याशयः । अपि च, प्रपन्नजनाः शरणागता भक्तास्तेषां वाञ्छितादभिलषितान्मनोरथशतादपि विशिष्टदानायोद्यता बद्धपरिकराः । शरणागतवत्सलेयं श्रीप्रिया शरणागतानां मनःसु सङ्कल्पितेभ्यो मनोरथेभ्योऽप्यधिकतरं दानाय सर्वदा प्रस्तुता भवति । एतच्च केवलमपाङ्गकल्पद्रुमविधेयैरेव संपाद्यते । अपि च, त्रितापयुता आध्यात्मिकाधिभौतिकाधिदैविकेतित्रिविधतापपरितप्ता ये सांसारिका देहिनस्तेषां कृते सततं कम्पिता आ समन्तात्पल्लवाः किसलयानि यैस्ते तथाविधा अपाङ्गकल्पद्रुमाः । लोकेऽपि त्विषाम्पतिघर्मतापपीडितस्य पान्थस्य तापशान्तिः कोमलकिसलयानां कम्पोद्भूतेन मातरिश्वना भवति, तथैव सांसारिकत्रिविधतापतापितानां जनानां

तापनिवृत्तये राधिकापि निरन्तरं स्वकीयानपाङ्गकल्पद्रुमाणां पल्लवान् कम्पयते। यद्वा, सततं कम्पिता आपदां लवा लेशा यैस्ते।

'लवो लेशे विलासे च च्छेदने रामनन्दने।
जातीफले कालभेदे..................।'

**अयम्भावः।** राधिकानयनकटाक्षकल्पद्रुमान् ये केचनाश्रयन्ते ते कुबेरस्य नवनिधिसम्पदुत्कर्षमधिगच्छन्ति। न केवलमेतावदेवापि तु सांसारिकत्रिविध-तापनिवृत्त्या संसारनिवृत्तौ सत्यामनिर्वचनीयं ब्रह्मानन्दमनुभवन्ति। कल्पद्रुम-पदयोजनेनायमप्यभिप्रायः स्फुटीभवति यत्सर्वविधैश्वर्यादपि त्रिविधतापशान्ते-रप्युत्तरं भक्तस्य समेषां मनोरथानां पूर्त्तिरवश्यम्भाविनी राधिकाकृपाकटाक्षपातत इति दिक्।

**रूपकालङ्कारः।** चलदपाङ्गा एव कल्पद्रुमा इत्यत्र।

**पृथ्वी छन्दः।**

( ५२ )

**श्रीराधे बहुकोटीति।** हे श्रीराधे! बहुकोटिरनेककोटिर्यः कामः कन्द-र्पस्तद्वद्रुचिरः सुन्दरो यः प्रेष्ठोऽतिशयेन प्रियो नन्दनन्दनः श्रीकृष्णस्तमुत्सुकं यथा स्यात्तथात्युत्कण्ठितचेतसाऽऽलोकनस्य व्यासङ्गेषु निरीक्षणस्य प्रसङ्गेषु तवे-क्षणानि लोचनानि नोऽस्माकं धियेन्दीवराणीवानुमतानि नीलोत्पलानीव गृही-तान्यासते। तथाहि-एतानि नेत्रेन्दीवराणि प्रेम्णोनुरागस्य य उत्पूर उत्कृष्टः प्रवाहः स एव दिनप्रकाशः पद्मिनीवल्लभद्योतितदिवसालोकस्तस्य विभवे प्रका-शैश्वर्यपुञ्जप्रभावे सुस्मेरतां शोभनं विकासभावं विन्दन्ति प्राप्नुवन्ति। अपि च, लज्जाया य उद्रेक आधिक्यं स एव निशोदयो रजनीसमारम्भस्तस्य व्यति-करे सम्बन्धे मीलन्ति सङ्कुचन्तीति सुस्थम्।

**अयमर्थः।** कन्दर्पकोटिलावण्यं भगवन्तं श्रीकृष्णचन्द्रं यदा भगवती श्रीराधिका लोचनगोचरतां नयति तदा तस्या आलोकितानि नीलनलिनानीवा-चरन्ति। निरीक्षणकाले राधिकाया अन्तःकरणे द्वौ भावौ समुद्भवतः। एकस्मिन्भावेऽतिशयानुरागस्योच्चावचाः कल्लोलाः प्रसर्पन्ति। यदेमे प्रेमकल्लोला-स्त्रिभुवने दिनकरकरनिकरवीचिजालानीव राधिकाया हृदयाम्भोधौ प्रवहन्ति तदा तेषामालोकेन राधिकानयनकमलान्यधिकतरं विकासमधिगच्छन्ति। लोकेऽपि प्रत्यूषे यदा पद्मिनीवल्लभः स्वकीयैः कोमलकोमलैः किरणकरैः शनैः शनैः पद्मा-नामङ्गानि स्प्रष्टुमारभते तदा प्रियतमकरस्पर्शसमकालमेव त्रिभुवनोत्पलानि प्रियस्पर्शपरमानन्दमभिव्यञ्जयन्ति विकसन्ति। नयननलिनयोर्विकसतोः सतो-

यदा राधिका भगवन्तमालोकयति तदा तस्या हृदयाम्भोधौ लज्जातरङ्गाः प्रादुर्भवन्ति । लोकेऽपि लज्जातरङ्गेषु प्रवहत्सु सत्सु कामिनीनां लोचनेन्दीवरदलानि तत्कालमेव सङ्कुचन्ति । तेन च ताः स्वप्रियतमं द्रष्टुं न प्रभवन्ति । अपि च, कविसम्प्रदाये प्रेम्णोरुणवर्णत्वाद्दिनप्रकाशेन, लज्जायाश्च श्यामवर्णत्वान्निशान्धकारेणोपस्थापनम् । प्रदोषे हि भूतले निःशेषाणि पद्मानि निमीलन्तीति विदितमेव समेषाम् ।

**उत्प्रेक्षालङ्कारः** । प्रेम्ण उज्ज्वलत्वादरुणवर्णत्वाच्च दिनप्रकाशरूपेणोत्प्रेक्षणम्, लज्जायाश्च श्यामवर्णत्वान्निशोदयरूपेणोत्प्रेक्षणमिति राधेक्षणयोरिन्दीवरत्वेनाध्यवसानादुत्प्रेक्षालङ्कारः । **स्वभावोक्तिरलङ्कारश्च** ।

अत्र प्राधान्येनानुभावानामेव वर्णनम् । तद्यथा—राधिकाया नेत्रयोः परमानन्दसन्दोहरूपस्य भगवतः श्रीकृष्णस्य दर्शनेन विकसनं निमीलनञ्चेति नेत्रयोर्विकसननिमीलनाभ्यां शृङ्गाररसस्याभिव्यक्तिर्भवति । अतएवात्र सहृदयहृदयाह्लादको रसध्वनिः । प्रेमोत्पूरे दिनप्रकाशस्यारोपणात्, लज्जोद्रेके च निशोदयस्यारोपणाद्रूपकालङ्कारौ वाच्यौ । तावत्र रसध्वनेरपि व्यञ्जकौ स्तः । अतएवात्रलङ्काराणामङ्गत्वमुपस्कारकत्वं रसध्वनेश्चाङ्गित्वादुपस्कार्यत्वाच्चोत्कृष्टमुत्तमोत्तमं ध्वनिकाव्यम् ।

**शार्दूलविक्रीडितं छन्दः** ।

## ( ५३ )

**नायं कदर्थयतीति** । हे राधे ! एष त्वदपाङ्गस्तव नेत्रप्रान्तभागोऽतितरां जयति सर्वोत्कर्षेण वर्तते । अयं तवापाङ्गः समुत्कर्षस्य विशिष्टं महिमानं द्योतयति । यथाहि, अयं कञ्चनापि विप्रयुक्तं वियोगिनं न कदर्थयति न प्रपीडयति । लोके हि सामान्यरूपेण नारीकटाक्षो विप्रलम्भे प्रियतमाया अनुपलब्ध्या सततं तामेव चिन्तयतः कदर्थिनः कदर्थनां तनोति । अयं पुना राधिकाकटाक्षः कमपि वियोगिनं कदापि नोत्क्लमयति, इति सामान्यनारीकटाक्षाद् राधिकाकटाक्षस्य समुत्कर्षप्रतिपादनाद्व्यतिरेकालङ्कारः । वेति विकल्पार्थकः शब्दः । अथ चैवमेष तव कटाक्षो मार्गणस्य बाणस्य पञ्चतां मकरध्वजस्य शरपञ्चकतामपि न मार्गयति न याचते ।

**अयमभिसन्धिः** । भगवतया: श्रीराधिकायास्त्रिलोकसुषमानिधिः कटाक्षोऽत्र कविधिया बाणरूपः समुत्प्रेक्षितः, तथाप्ययं राधिकाकटाक्षः कामदेवस्य पञ्चसंख्याकेषु बाणेषु स्वकीयां स्थितिं कदापि न गवेषयति, न वा कन्दर्पपञ्चसायकान्यतमसारूप्यं कामयते । ननु राधिकाकटाक्षबाणेन कन्दर्पपञ्चसाय-

कान्यतमसादृश्यालिभाषुकत्वेन भाव्यं तेषां सर्वसुन्दराभिमतत्वादिति चेन्न, राधिकाकटाक्षबाणस्य कामदेवबाणेभ्योऽप्युत्कृष्टत्वादिति कामदेवबाणेभ्यो राधिकाकटाक्षबाणस्य समुत्कर्षप्रतिपादनाद्व्यतिरेकालङ्कारः।

अथापि नूनमाश्चर्यमयः खल्वयमुदन्तो यदयं राधिकाकटाक्षः स्मरान् सूते—तदपि न केवलमेकमेव जगत्प्रसिद्धं स्मरं मकरकेतनमपि त्वसंख्यातान् स्मरान् (मनोरथान्) सूते स्वपातोपक्रमकाल एवोद्गमयति। अपि च, अशेषं भवं संसारं दहत्येव भस्मसादेव करोति।

पूर्वं हि भगवान् भवो भवानीपतिः शङ्करः कामं ददाह। अत्रैकतो राधिकाकटाक्षः नूनमगणितान् कामान् उत्पादयत्यपरतश्च भवं साक्षाच्छिवमपि दहतीति विशेषः।

न चानेककामोत्पादको राधिकाकटाक्षः कामदाहकाच्छिवादेवात्मानं दाहयेन्न तु तं दहेदिति विरोध इति वाच्यम्, भवशब्दस्य संसारार्थाङ्गीकरणेन तत्परिहारादिति **विरोधाभासालङ्कारः।**

**वसन्ततिलका छन्दः।**

( ५४ )

**राधे त इति।** हे राधे! ते तव प्रियतायाः प्रेम्णो यः कटाक्षस्तस्य विषयीभूतः स सप्ताब्दकः सप्तहायनः कृष्णः सप्तवर्षायुष्को बालमुकुन्दः क्षमाधरगुरुं पर्वतमुकुटमणिं गोवर्धनं तन्नामकमद्रिं लीलया स्वैरलीलाविलासमात्रेणैव छत्रयति छत्रमिवाचरति। (धरन्तीति धराः, क्षमाया विश्वम्भराया धरा इति क्षमाधरा धरणीधराः पर्वतास्तेषां गुरुं श्रेष्ठमिति यावत्)। सप्तवर्षात्मके प्रथमे वयसि वर्त्तमानोऽपि श्रीकृष्णो गिरिराजाख्यं पर्वतगुरुं छत्रवदधारीत्यत्र किं निमित्तमित्याह—केवलं ह्लादिनीशक्तिरूपिण्या भगवत्याः श्रीराधिकायाः सानुरागः कटाक्षपातः। अपि च, दावं दावानलं पानयति पानमिवाचरति। ब्रह्मादिदेवाधिपान् ब्रह्मेन्द्रप्रभृतीन्निर्जरेश्वरान् स्वकिङ्करयति स्वकिङ्करानिवाचरति। जलगतः कालिन्द्याः कालियनागविषोल्वणाम्बुराशौ त्रुडितो व्यालस्य कालियनागस्योत्फणालीमुद्रूर्ध्वां फणानामालिं पङ्क्तिमलं पर्याप्तं सद्रङ्गस्थलयति सद्रङ्गस्थलमिवाचरति। लीलयैव भगवान् भुजङ्गफणानुत्प्लुत्य समारुरोह। अथाखिलकलागुरुस्तथा ननर्त यथा तत्पृथुशिरः सद्रङ्गस्थलमिव प्रतिबभौ।

**अयम्भावः।** सच्चिदानन्दस्वरूपेण नन्दनन्दनेन भगवता श्रीकृष्णचन्द्रेण बाल्यावस्थायामेवं तादृश्यतिमर्त्यानि भूयांस्यलौकिकशक्तिसाध्यान्यद्भुतानि

कर्माण्यकारिषत यत्तानि श्रीकृष्णस्य भगवत्त्वपरब्रह्मत्वपूर्णावतारत्वसिद्धौ कल्पानि समजनिषत । यथाहि—

(१) जगदीश्वरः श्रीकृष्णः सोपजीविनां सव्रजानां स्वाश्वासितमानसानां व्रजवासिनां संरक्षणैकधिया गिरिराजं गोवर्धनमेकेनैव करारविन्देन छत्राकमिवोत्पाट्य सप्ताहं दधौ । श्रीमद्भागवतमहापुराणम् १०, २५, १६ ।

**'यः सप्तहायनो बालः करेणैकेन लीलया ।**
**कथं बिभ्रद् गिरिवरं पुष्करं गजराडिव ॥'**

श्रीमद्भागवतमहापुराणम् १०, २६, ३ ।

(२) यदोपमिहिरतनयं निशीथे प्रसुप्तं गोगोपवृन्दं प्रचण्डो दावानलः प्रदग्धुमुपचक्रमे तदा सर्वथा सम्भ्रान्तानां दह्यमानानामितस्ततः पलायनपरायणानां व्रजवासिनां दैन्यं वैक्लव्यञ्च निरीक्ष्य योगयोगेश्वरो गोविन्दो घोरतमं कालाग्निनिभं दावानलं लीलयैव पपौ । श्रीमद्भागवतमहापुराणम् १०, १७, २५ ।

(३) रसेश्वरस्य यस्य भगवतः श्रीकृष्णस्य चरणसरोरुहयोः प्रश्रयविनम्रकन्धरः संपुटिताञ्जलिः परमेष्ठी ब्रह्मा झटित्येव स्वासनादवतीर्य, जाम्बूनददण्डवदभिपात्य स्वकीयं वपुः, चतुःकिरीटकोटिभिश्चरणयुगलीं प्रणम्य, पुनः पुनः पादयोः पतन्नयनवाष्पनीरधाराभिरभिषेकं सम्पादितवान् । श्रीमद्भागवतमहापुराणम् १०,१३,६०-६४ ।

(४) **'तन्मूर्धरत्ननिकरस्पर्शातिताम्र-**
**पादाम्बुजोऽखिलकलादिगुरुर्ननर्त ।'**

श्रीमद्भागवतमहापुराणम् १०,१६,२६ ।

इत्येतासु चतसृषु बाललीलासु श्रीकृष्णस्य यो महिमा वरीवृतीति तं प्रति भगवत्या वृषभानुनन्दिन्याः श्रीप्रियाया राधिकायाः प्रेमकटाक्षपात एवं हेतुरासीदिति निम्बार्कचैतन्यादिवैष्णवसम्प्रदायानुमतो ग्रन्थकारसम्मतः सिद्धान्तो जयति ।

**क्यज्लुप्तोपमा ।** छत्रयति, पानयति, किङ्करयति, रङ्गस्थलयति, इत्येतेषु चतुर्षु प्रयोगेष्वाचारार्थे क्यच् प्रत्ययो बोध्यः ।

**शार्दूलविक्रीडितं छन्दः ।**

( ५५ )

**श्रीराधे सा सुधेति ।** हे श्रीराधे । सा सुप्रसिद्धा सुधा पीयूषदेवी ते तव परमः सर्वोत्कर्षेण वर्त्तमानो यो रसस्तद्युक्तं यद्वचस्तस्य माधुरीतो मधुरिम्णः सकाशान्महार्णं महद् ऋणं प्राप्याधिगत्येन्दुं सुधाकरं क्षीरधिं क्षीरसागरञ्च प्रतिभुवमकरोत् । धनिकाधमर्णयोरन्तरे यस्तिष्ठति विश्वासार्थं स प्रतिभूः ।

'भुवः संज्ञान्तरयोः' पा० ३,२,१७९ इति क्विप् । सर्वतोऽधिकं माधुर्यं राधिका-वदनारविन्दनिर्गच्छद्वचनविन्यासे तिष्ठतीति तस्या ऋणजिघृक्षया सुधाकरं क्षीरसागरञ्चेति द्वौ साक्षिणावुपस्थापितवती । गृहीतमाधुर्यकणा तदनिवर्चनीया-स्वादाप्लावितहृदया पीयूषदेवी तु स्वयं स्वः स्वर्गं प्रयाता पलायिता । लोकेऽपि नूनमधमर्णे ऋणापाकरणाक्षमे क्वापि पलायिते च प्रतिभुवा तदपाकार्यमिति नियममनुसृत्य प्रथममुदधिः क्षीराम्भोनिधिर्दत्तः समर्पितोऽशेष आत्मसारो येन समर्पिताशेषमाधुर्यपुञ्जोऽपि ऋणी सन् क्षारवारिर्लवणाकरः संवृत्तः । राधिकाया ऋणनिराचिकीर्षया स्वकीयं निःशेषं दुग्धमाधुर्यसारं निश्च्योत्य तच्चरणयोः समर्पयामास, तथापि तन्महार्णमशेषतः प्रत्यर्पयितुमशक्नुवन् लवणाम्बुधिः सम-जनि ।

अपरः प्रतिभूः साक्षी चन्द्र आसीत्तस्य कीदृशी दशा सञ्जातेति श्रूयताम्—इन्दुः सुधाकरः सुधागृहीतमाधुर्यप्रत्यर्पणाकल्पो ह्लीतो लज्जितः सन् खमाकाशं-गतः । पृथिवीतः पलाय्य गगनमाश्रितः । तत्रापि निशि घनतिमिरपटलपट-समावृतायां रजन्यामेव चरति भ्राम्यति । ननु दिवा दिवसे कथन्नावलोक्यत इति चेदाह—अङ्कमस्यास्तीत्यङ्की सकलङ्कः सन्, ऋणमस्यास्तीति ऋणी गृहीत-माधुर्यर्णोऽयं दिवाऽपन्हुते दिवा सञ्चरितुमशक्नुवन् स्वात्मानं गोपायतीति भावः । लोकेऽपि सत्यमप्रत्यावर्त्तितद्रविणः प्रतिभूः पलायते, स्वकीयं कलङ्कितं मुखञ्चादर्शयितुकामो गुप्तरूपेण रात्रावेव चरति । 'ह्लीत' इत्यत्र 'नुदविदोन्द-त्राघ्राह्रीभ्यो'-पा० ८,२,५६ इत्यनेन वैकल्पिकं णत्वम् । पक्षे ह्लीण इति प्रयोगः साधुः ।

**अयमभिसन्धिः** । निखिलभुवनमधुरिमा मूर्त्तीभूतः सन् भगवतीं वार्ष-भानवीं परिचर इवानुचरतीति प्रथितं श्रवः श्रावं श्रावमेकस्मिन् समये सुधादेवी तन्मधुरिम्णः सहस्रांशकणर्णं राधिकां ययाचे । भगवती श्रीराधा लौकिकीं स्थितिमनुवर्त्तमाना प्रतिभुवमन्तरा ऋणं नानुमेने । लोकेऽपि ऋणजिघृक्षुणा कश्चित्साक्षी समानीयते । यथा सहस्रं कामयमानं प्रति सहस्राधिप एव प्रतिभू-त्वेनाङ्गीक्रियते, तथैवात्रापि राधिकामाधुर्यतुल्यमाधुर्यभागेव जनः प्रतिभूः स्या-दिति चतुर्दशब्रह्माण्डान्यन्विष्यन्ती क्षीरसागरं सुधाकरञ्चानीतवती । तावू-चतुः-हे राधिके ! दीयतामस्यै माधुर्यांशकणिका । यदीयं न प्रत्यावर्त्तयिष्यति तदाऽऽवां दास्यावः । एतदाकर्ण्य श्रीराधिका स्वकीयां प्रियां परिचारिकां सहचरीं वाग्देवीमादिदेश । वाग्देवीतः कतिचिन्माधुर्यकणानुपलभ्य कृतकृत्यमिवात्मान-माकलयन्ती सुधादेवी तु स्वर्गमपचक्राम । नाद्यावधि प्रत्यागता । अतिक्रान्ते च भूयसि काले राधिका क्षीरसागकमधिचिक्षेप—भोः ! कुत्र तव प्रिया सहचरी

सुधा ? प्रतिनिवर्त्यतामधुना मम माधुर्यांशः। क्षीरसागरेण तु स्वकीयमशेष-माधुर्यमेकत्रीकृत्य श्रीप्रियायाश्चरणयोः समर्पितं तथापि तद् राधिकामाधुर्यकण-तुलां न प्रपेदे। कदा कथञ्चाहमृणमपाकरिष्यामीति चिन्तयाऽऽचान्त इव क्षीर-सागरस्तु लवणाकरत्वेन परिणतः। अधुनाऽपरः प्रतिभूः सुधाकरोऽचिचिन्तत् यदहो यदा क्षीरसागरस्यैवैतादृशी दुरवस्था संवृता तदा मम का गतिरिति लज्जितो वियग्दतः सर्वदा रात्रावेव भ्राम्यतीति नितान्तं हृद्येयं कल्पना।

**पर्यायोक्तालङ्कारः**। तद्यथा, राधिकावाङ्माधुर्यं सुधामाधुर्यान्मधुरतर-मित्यर्थे विवक्षिते, तस्यैवार्थस्य भङ्ग्यन्तरेण संवर्णनात्पर्यायोक्तालङ्कारः।

**स्रग्धरा छन्दः**।

( ५६ )

**अशेषब्रह्माण्डेति**। अशेषाणि निखिलानि यानि ब्रह्माण्डानि तेष्वप्रतिम-भटा अप्रतिच्छन्दयोद्धारो ये कामा मनोरथास्तेषामुद्भवस्योत्पत्तेर्भुवः स्थानानि। राधिकादृशां विशेषणम्। सर्वेष्वपि ब्रह्माण्डेषु येषां मनोरथानां सादृश्यं तुलयितुं नान्ये केऽपि प्रभविष्णवस्तेषामपि प्रादुर्भावस्थानस्वरूपिण्यो राधिकादृशो जयन्ति। इमा भक्तानां श्रीप्रियाशरणं गतानां रसिकानां हृद्यन्तःकरणे समस्तान् निःशेषान् निहिताश्च ये कामास्तान् संस्थापिताभिलाषान् प्रदुहते। प्रोपसृष्टदुहेर्लटि प्रथम-पुरुषबहुवचनम्।

अपि च, यद्यपीमा दृशः सभृतरसरागास्तथापि पदाश्रितानां राधिका-चरणशरणं भजमानानां भक्तानां वैराग्यमरसताञ्चेहास्मिन् जगति सुवते समु-त्पादयन्तीति हन्त नूनमाश्चर्यमावहति चेतः। भृतेन परिपूर्णेन रसेन रागेणा-सक्तिरूपकेण प्रेम्णा च सहिता यास्ताः सभृतरसरागा दृश इत्याशयः।

ननु स्वतो रसरागपूर्णाभिर्दृग्भिस्तु शरणागतेभ्योऽपि रसरागावेव प्रदा-तव्यौ, कथमिमा अरसतां रसशून्यत्वं वैराग्यं रागशून्यत्वञ्च सुवीयातामिति विरोध इति चेन्न, वैराग्यपदस्य सांसारिकप्रपञ्चाद्विरतिरित्यर्थाङ्गीकारेणारसता-पदस्य च वैषयिकेषु पदार्थेषु रसरहितत्वमित्यर्थाङ्गीकारेण परिहारात्।

**अयम्भावः**। भगवद्भक्तानां येषां मनोरथभटानां तुल्योऽपरः कोऽपि मनो-रथभटोऽशेषेऽपि ब्रह्माण्डमण्डले क्वापि नावलोक्यते, तेषामप्युत्पत्तिस्थानानि राधिकानयनाञ्चलानि विद्यन्ते। यत्र भक्तान्तःकरणान्तःपातिसकलसङ्कल्पपूरयित्री शक्तिः सन्निधत्ते। इमानि नयनान्येकतोऽमृतरसभृतान्यनुरागैकरागानुरक्तानि च, तथाप्यपरतो रसतां रागभावञ्च भक्तेभ्यो नानुमन्वते। अथ च राधिकादृशः संसाराद्विरतिं विषयेष्वरसताञ्च जनयन्तीत्यहो नूनमाश्चर्यम्। राधिकानयनाञ्चल-

पातमात्रेणैव भक्तानां निखिलमनोरथपूर्त्तिः संसाराद्वैराग्यं विषयेषु च सर्वथाननुराग इति ताः सर्वोत्कर्षेण वर्त्तन्ते ।

**विरोधालङ्कारः ।**

**शिखरिणी छन्दः ।**

( ५७ )

**त्वदधरसुधेति ।** त्वदधरस्य या सुधा पीयूषं तस्या माधुर्यस्यांशो लवो मधुसूदनस्य श्रीकृष्णस्याधरयुगं श्रितः प्राप्तः । राधिकाया अधरे सुधासागरो निवसतीत्यर्थः । श्रीकृष्णकर्त्तृकचुम्बनपरिरम्भणव्यापारात्ततोऽनिवर्चनीयस्य सुधामृतस्य कणः श्रीकृष्णस्याप्यधरयुगे संश्लिष्टः । तदनन्तरमितोऽस्माच्छ्रीकृष्णाधरयुगसंश्लिष्टात्पीयूषलेशादयं मुरारिमुखस्थितां मुरलीं वंशीं यातः । यदा मुकुन्दो मुरलीं निनादयामास तदा मधुकरा अपि तस्या पीयूषप्रस्राविण्या माधुर्यमन्दाकिन्या आस्वादमकार्षुः । अधुना हे राधे ! विरमिते तु मुरलीध्वनौ सर्वेऽलयो मुरारिमुरलीस्वनामृतरसैकचेतसः प्रचुरलालसा भ्रमराः पुनस्तदवाप्तये तत्तादृशमनिर्वचनीयं सुधामाधुर्यं नूनं मुरल्यां निहितमासीदिति धिया तस्यैव सुधामाधुर्यस्यावाप्तये किमु वेणुष्वसंख्यातेषु वंशेषु छिद्रकरणे व्यग्रा अभूवन् ? यतः खलु मुरली वेणुनिर्मिताऽऽसीत् । तस्यामेव तदमृतमाधुर्यं सन्निविष्टमिति विचार्याद्यावधि मधुकरा वेणुषु भ्रमन्ति । तत्र च रात्रिंदिवं विवरसम्पादनैककर्मरता दृश्यन्ते । एकस्मिन् वंशे कृतच्छिद्रा अपरस्मिन् वंशे प्रयान्ति, न च तस्मात्कर्मणो विरमन्ति । कदाचित्कस्मिंश्चिद्वंशे पुनस्तादृक्सुधामाधुर्यस्य रसनिस्यन्दास्वादो लभ्येत, यो हि नाम पूर्वं श्रीकृष्णमुरलीध्वनावन्वभावीति धिया ।

**अयम्भावः ।** भगवत्याः श्रीप्रियाया अधरं सुधासागरस्य वसतिः । तस्माच्छ्रीकृष्णकर्त्तृकचुम्बनवेलायां कदाचित्कोऽपि लघीयान् लवः श्रीकृष्णाधरयुगलीमुपागतः । मुरलीवादने च प्रवृत्ते तस्मिन् तस्यैव राधिकाधरसुधासागरमाधुर्यकणस्य परम्परागतसम्बन्धेन मुरल्या विवरेष्वन्वितिः । भ्रमराश्च ध्वनौ समुपलब्धालौकिकरसनिस्यन्दास्वादा मुरलीमेव तत्त्वतो निरदीधरन् । मुरली च वेणुनिर्मितेति वेणुष्वजस्रं छिद्रं कुर्वन्ति । कदाचित्तत्र पुनर्माधुर्यांशोपलब्धिः स्यान्नाम ।

**हेतूत्प्रेक्षालङ्कारः ।** मधुकराणां सामान्यं वेणुपरिगतं भ्रमणं प्रस्तुते सुधाप्राप्तिहेतुरूपेणोत्प्रेक्षितमिति हेतूत्प्रेक्षा । एवमेवैकस्यैव सुधामाधुर्यांशस्योत्तरोत्तरं भिन्नभिन्नस्थानगतत्वात्पर्यायोऽलङ्कारः ।

**हरिणी छन्दः ।**

( ५८ )

राधे तेऽक्ष्णोरिति । हे राधे ! ते तवाक्ष्णोर्लोचनयोः पथि मार्गे कोऽपि जघन्योऽपि गर्हितोऽपि जनो निपतितश्चेद्यदि निपतेन्नाम तदा स क्षिप्रं द्रागेव धन्यो भवति । जघन्यशब्दस्तु कुटिलं हन्यते निन्द्यते वेत्यर्थे यङन्ताद् √हनधातोः "अयो चत्" पा० ३।१।९७ इति यत्प्रत्ययान्तो बोध्यः । अनित्यमागमशास्त्रमिति नुगतोऽनुनासिकान्तस्येति न नुक् । यदा सर्वथोपेक्षितधर्म्याचारविचारो विपुलांहोभागपि जनो राधिकालोचनगोचरतां गतो धन्यतां व्रजति तदा का कथा खलु सततं राधिकाचरणशरणाश्रितानां रसिकानाम् । अपि च, श्रीप्रियादृष्टिपथमुपागतोऽन्यैर्जपपाठयज्ञदानव्रतानुष्ठानतपःपरायणैः सत्तमोऽतिशयेन सज्जनो मन्यते । यदहो अस्माभिस्तु कष्टसाध्यानुष्ठानाचरणैरपि न खलु तादृक् सौभाग्यमलम्भि यादृगनेन केवलं राधाकृपापाङ्गपाततः प्रापीत्ययमेव धन्यः । न केवलमेतावदेवापि त्वेतादृशः पुरुषो जातौ ख्यातिं विन्दते । श्रुतिराम्नायस्तस्याः पन्था इति श्रुतिपथस्तस्मिन् वेदमार्गे मतिं सद्धीवृत्तिं विन्दते । अपि च, अमन्द आनन्दो यस्यां तादृशीं सम्पदं विन्दते । प्रशस्तं चायनीयं विष्वक् समन्तात्प्रसृमरं प्रसरणशीलं यशो निन्दते । प्रसृमरशब्दस्तु "सृघस्यदः क्मरच्" पा० ३।१।१६१ इति क्मरच्प्रत्ययान्तो बोध्यः ।

अयम्भावः । इदं पद्यं राधिकायाः कटाक्षस्य लोकोत्तरं चमत्कारमभिव्यनक्ति । लोके हि कोऽप्यसंस्पृष्टसदाचारजलकणो नैकविधदुराचारपरायणत्वात् साधुभिर्धिक्क्रियमाणः सार्वत्रिकेणोपक्रोशेनावधीर्यमाणोऽपि राधिकानयनाञ्चलवीथिभाजनतामुपगतो नीलपीतयोः संयोगेनोद्भूतहरिद्वर्ण इवानालोकितनीलपीतस्तदात्व एव परित्यक्तापक्रोशविषयककार्यकलापो धन्यतां व्रजति । ततश्च पञ्च सम्पदो लभते ।

(१) सर्वेऽपि साधनरता रसिका भक्तास्तमेव सत्तमं मन्वते, राधिकाचक्षुःपथपातित्वेन हेतुना समूलमुन्मूलितजन्मजन्मान्तरदुरितत्वादिति त्रिभुवनप्रशंसाभाजनता प्रथमा सम्पत् ।

(२) यदा पुञ्जीभूतः खल्वेनःपङ्को राधिकानयननीरधारया धौतस्तदा महद्भिरभिमन्यमानत्वात्स्वीयायां जातौ सुख्यातिमधिगच्छतीति द्वितीया सम्पत् ।

(३) ततश्च वेदवेदाङ्गाध्ययने सती मतिः प्रवर्त्तते, इति तृतीया सम्पत् ।

(४) निगमागमाध्ययनोद्भूतायामेव सम्पदि निरन्तरं प्रवहन्नमन्द आनन्दोऽनुस्यूतो भवतीति तुरीया सम्पत् ।

(५) ततश्चातीव प्रशंसनीयमशेषधरणिमण्डलमण्डनायमानं सर्वत्र प्रस-

रणशीलं यशः प्रादुर्भवतीति पञ्चमा सम्पदित्यहो महिमाविभवश्च श्रीप्रियानुकम्पायाः ।

**तुल्ययोगितालङ्कारः** । एकस्या वेदनक्रियायाः सकृदुपादानाद् बहुभिः पदार्थैः सह च सम्बन्धात् ।

यथाहि काव्यप्रकाशे—"नियतानां सकृद्धर्मः सा पुनस्तुल्ययोगिता ।"
(कारिका १०४)

**मन्दाक्रान्ता छन्दः ।**

( ५६ )

**जगत्यामिति** । हे श्रीराधे ! जगत्यां भूमण्डले स्वोत्कर्षेण स्वसम्पदुकर्षमहिमोल्लासेन प्रहसितः प्रकर्षेणोपहासविषयं नीतः सुनासीरस्य वृद्धश्रवसो विभव ऐश्वर्यं यैस्ते । एतादृशाः कतिपयेऽङ्गुलिमात्रगणनीयाः केचन महैश्वर्यशालिनो धनिनः कनकशिबिकाभिः कलधौतपरिमण्डितैः शिबीरथैश्चरन्ति गमनागमनव्यापारमितस्ततो निर्वर्तयन्ति । एनांश्च न्यक्कृतदिविषदीश्वरैश्वर्यानन्ये दीना भूयांसः खलु दारिद्र्योपहतास्तृणप्राया निर्धनाः परवशतया द्रव्यजिघृक्षापरतन्त्रताशृङ्खलानिगडीकृतमनोरथतया वहन्ति स्वस्कन्धयोरारोपितयाप्ययानाः स्खलद्गतयोऽपि धारयन्ति ।

ननु किन्निमित्तमेतद्वैषम्यमिति चेदाह—हे श्रीराधे ! तदिदं तदेतद्वैषम्यमिह संसारेऽवलोक्यमानं ते तव कृपापाङ्गस्य कृपाकटाक्षस्य यः स्तोकः स्वल्पोप्यन्वयः सम्बन्धः (ऐश्वर्यशालिनां पक्षे) तस्य च सम्बन्धस्य विरहोऽसम्बन्धः (दीनानां पक्षे) तस्य विस्फूर्जितं विलसितमिति मन्ये ।

**अयम्भावः** । अत्र कविः स्पष्टमुदीरयति यज्जगति धनिनामैश्वर्यवितानं राधिकानुकम्पाकटाक्षसम्पर्कमात्रेणैव तन्यते । यच्चाखण्डलस्यापि श्रियमतिशेते । येन हेतुना तेषां सौभाग्यभाजां काञ्चनेषु याप्ययानेष्वानन्दोद्गमः समुदेति । अपरतश्च राधिकानुकम्पाकटाक्षासम्बन्धतया गमनाभिलाषोन्मुखान् द्रविणद्रोणीकाणान् धनिकान् प्रतीक्षमाणाः केचन निर्धनाः सदोत्कास्तान् वोढुं स्वात्मनः कृतार्थतां निनीषन्ति । नूनमयं राधिकायाः कृपाविलासो यदेकः शिबिकया पर्यटति । एतदपि राधिकायाः कृपाविरहस्य विस्फूर्जनं यदपरो दीनस्तं वहति ।

**शिखरिणी छन्दः ।**

( ६० )

**विद्वत्तात्त्विकेति** । हे राधिके ! विदुषामात्मविदां तात्त्विकानि तत्त्व-

पूर्णानि ब्रह्मज्ञानप्रतिपादनपराणि यानि भाषणानि तेषां श्रुतिविधौ श्रवणक्रमे सर्वदाऽप्रत्ययान् विश्वासरहितान्। विद्वच्छब्दस्य तु आदादिकाद् √विदज्ञाने इत्यस्माद्धातोर्वेत्तीत्यर्थे शतृप्रत्यये कृते सति "विदेः शतुर्वसुः" पा० ७, १, ३६ इत्यनेन शतुर्वस्वादेशे आत्मविदित्यस्मिन्नर्थे प्रयोगो बोध्यः। तात्त्विकशब्दस्तु तनोति सर्वमिदमित्यर्थप्रतिपिपादयिषया तानादिकाद् √तनु विस्तारे इत्यस्माद्धातोः पृषोदरादित्वात् क्विप् प्रत्ययेन तुगागमेन च सिद्धयतीति तत्वम्।

यद्वा, "सर्वं खल्विदं ब्रह्मेति" श्रुतिप्रामाण्यात् तच्छब्दो ब्रह्मपरामर्शकस्तस्य ब्रह्मणो भावस्तत्त्वं तस्य तत्त्वस्य ब्रह्मस्वरूपस्य सम्बन्धीनि तात्त्विकानि ब्रह्मस्वरूपज्ञानसम्बन्धीनीत्यर्थः।

यद्वा, विदुषामात्मविदां श्रीकृष्णविषयकैकज्ञानजुषां तात्त्विकानि श्रीकृष्णसम्बन्धीनि यानि भाषणानि। अस्मिन् पक्षे तत्त्वशब्देन श्रीकृष्णस्य ग्रहणम् "कृष्णात्परं किमपि तत्त्वमहं न जाने" इति श्रीमधुसूदनसरस्वतीवचनप्रामाण्यात्सर्वं सुकरम्।

अपि च, शास्त्रेष्वपि जीवब्रह्मज्ञानप्रतिपादकेषु धर्माधर्मसंशयतदुच्छेदकचणेषु ग्रन्थरत्नेष्वपि नाधीतिन इत्यनधीतिनः स्वाध्यायव्यासङ्गविरहितानित्यर्थः। 'अधीतिनः' इत्यत्राधीतमनेनेत्यर्थे 'इष्टादिभ्यश्च' पा० ५,२,८८, इत्यनेनेन् प्रत्ययः।

यद्वा, शास्त्रेषु श्रीराधाकृष्णरहस्यप्रतिष्ठापकेषु श्रीमद्भागवतमहापुराणादिवैष्णवग्रन्थेष्वित्याशयः।

अपि च, सुमतिनुद्या पाश्चात्यविद्या तां जुषन्ते सप्रीति सेवन्ते तानिति। सुमतिविनाशकपाश्चात्यविद्यावत इति भावः। √जुषी प्रीतिसेवनयोरित्यस्माद् क्विप् प्रत्ययः। ननु सिद्धान्तकौमुद्यां धातुपाठे विनाशार्थकनुदधातोरभावादसाधुरयं प्रयोग इति चेन्न, धातूनामनेकार्थत्वाच्छब्दकल्पद्रुमादिकोषग्रन्थेषु च तमोनुत्तमोनुदावित्यादिप्रयोगेषु विनाशार्थकनुदधातोः प्रयोगोपलम्भात्।

अथ, नास्तिक्येन हेतुना नास्तिक्यतयाऽप्रसरन् विस्तरमप्राप्नुवन् विवेकविभवः सदसद्विवेचकबुद्धिव्यापारविलासो येषां तान्। नास्तिकशब्दस्तु नास्ति परलोक ईश्वरो वेति मतिर्यस्येत्यर्थे "अस्ति नास्ति दिष्टं मतिः" पा० ४,४,६० इत्यनेन ठक्प्रत्ययान्तः सन् ईश्वरानस्तित्ववादिवेदाप्रामाण्यवादिपरामर्शकः। नास्तिकस्य भावो नास्तिक्यम्। सुकृतं नास्ति, परलोको नास्ति, ईश्वरो नास्ति, धर्मो नास्ति, इत्येतादृश्या नास्तिक्यबुद्धया सदसद्विवेचिनी बुद्धिः कुण्ठीभवतीत्यभिप्रायः। एवमेव हेतुस्तर्क एवैकवाद ऐकान्तिकं यथार्थबोधवाक्यं स एवाश्रयः संश्रयो येषां तान् केवलं तर्कवादसन्नद्धान्। अनेन तर्कवादावलम्बिनां 'तर्काऽप्रतिष्ठानात्' २,१,११, इति ब्रह्मसूत्रवचनात्तर्कस्याप्रतिष्ठितत्वात्, "यो

बुद्धेः परतस्तु सः" (३।४२) इति श्रीमद्भगवद्गीतावचनादीश्वरस्य बुद्धेः परतरत्वात्, परमतखण्डनवृत्तितया वितण्डापरपर्यायहेत्ववलम्बनं प्रत्याचख्यौ। "योऽवमन्येत ते मूले हेतुशास्त्राश्रयाद्विजः। स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः।" मनुस्मृतिः २,११, इति मनुप्रामाण्यान्नास्तिक एव हेत्वाश्रयी। भगवत्प्राप्तौ तर्को बुद्धिवादश्च प्रतिबन्धकाविति सर्वथा स्पष्टम्। अपि च, एनस्विनो मनुजान् पापिनो जनान् हे राधिके! तव दृक्पाता नयनाञ्चलकृपाकटाक्षपाता न स्पृशन्ति। एनः पापमस्ति येषां त एनस्विनः—"अस्मायामेधास्रजो विनिः" पा० ५,२,१२१, इत्येनःशब्दाद्विनिर्बोध्यः।

**अयम्भावः**। अस्मिन् पद्ये दीर्घसमासप्रसरेणापि लालित्यमावहन्त्यातीवौजस्विन्या हृदयहारिण्या शैल्या ग्रन्थकारः 'षड्विधैर्जनैः राधिकाकृपाकटाक्षपातः कदापि नाधिगम्यते' इति प्रत्यतिष्ठिपत्।

(१) सत्सङ्गविरहिताः कथाश्रवणे वेदान्तादिशास्त्रप्रवचनश्रवणे वा विश्वासशून्याः। तेन श्रवणम्।

(२) श्रीमद्भागवतमहापुराणादिदिव्यग्रन्थपठनविरता अनाघ्रातधर्मशास्त्रादिसुमनोग्रन्थाः। तेन मननं निदिध्यासनञ्च।

(३) पाश्चात्यविद्योपलब्धये निरताः। अनेन पाश्चात्यविद्याजुषां कृतेऽतीव मनोरमः कटाक्षः कृतः। पाश्चात्यविद्या तावत्सुमतिं विनाशयति, कुमतिञ्चोत्पादयति। सुमतिस्तु सर्वेषां प्राणिनामिन्द्रियाधिष्ठातृदेवस्य हृषीकेशकृष्णस्य कृपाकटाक्षभूः।

(४) नास्तिकान्।

(५) केवलं तर्कवादावलम्बिनः।

(६) पापिनः।

**शार्दूलविक्रीडितं छन्दः**।

## ( ६१ )

**कवयतु कृतीति**। हे श्रीराधे! कृती शास्त्रेषु कृतभूरिश्रमः पुण्यवान् पण्डितश्चाटुरूपा मिथ्याप्रियवल्गुवाक्यरूपिणी या श्लाघा प्रशंसा तत्र पटुर्दक्षः पृथिवीपतीन्महीपालान् कवयतु कविताविषयं नयतु नाम। कवयतीति तु कविरिवाचरतीत्यर्थे नामधातावाचारार्थे क्विप् प्रत्ययः। प्रयोगश्च यथा—

**"कवयति पण्डितराजे कवयन्त्यन्येऽपि विद्वांसः।**
**नृत्यति पिनाकपाणौ नृत्यन्त्यन्येऽपि भूतवेतालाः॥"**

स्तवीतु नाम पण्डितो भूपतिमिन्द्रस्त्वं वरुणस्त्वं कुबेरस्त्वमित्यादिमिथ्यावचन-विन्यासैरित्यर्थः ।

यद्वा, तादृशः पुरुषो भूयिष्ठस्य विपुलस्यार्थस्य धनराशेः प्राप्तये भुवि वसुन्धरायां दश दिशः सर्वत्र ककुभः समटाट्यतां बम्भ्रम्यताम् । 'समटाट्यता'-मिति तु समुपसृष्टस्य यङन्तस्य √अट सातत्यगमने इत्यस्माल्लोटि प्रथमपुरुषैक-वचने रूपम् ।

यद्वा तपस्तपतु तपश्चर्याया दारुणान् क्लेशान् सहताम् । किन्तु हे श्रीराधे ! ते तव करुणास्पृशोः कृतकृपास्पर्शयोर्दृशोर्लोचनयोर्यदि विषयो न, यदि तादृशो जनस्तव करुणाकटाक्षभाजनतां न प्रयाति तदासौ साध्येषु भगवत्प्राप्ति-सम्बद्धेषु विषयेषु सिद्धिं साफल्यं कथमश्नुतां कथं लभताम् । सर्वथाऽशक्यमेत-दिति भावः । करुणास्पृशोरित्यस्य तु करुणां स्पृशतीत्यर्थे √स्पृश बाधनस्पर्शन-योरित्यस्माद्धातोः क्विबन्तात्करुणास्पृक्छब्दात् षष्ठीद्विवचने प्रयोगो बोध्यः ।

**अयम्भावः** । राधिकादृक्पातमन्तरा भगवत्प्राप्तिः कथमपि न सम्भाव्यते, इति ग्रन्थकारेणात्र साधीयस्या वाचोभङ्ग्या निरुपितमास्ते । मिथ्याप्रशंसाप्रचु-रेण नवनवकाव्यप्रणयनोन्मेषेण भूपालप्रसादनं वा, समधिककवित्वशक्तिलिप्सया पौनःपुन्येन मेदनीपरिभ्रमणं वा, कृच्छ्रचान्द्रायणादिव्रताचरणं पञ्चाग्नितपस्त-पनं वा तावदवधि सर्वथा सत्क्रियाकारिविरहितं यावदवधि राधिकादृक्पातानुप-लब्धिः । यतः खल्वयमेव श्रीमन्मुकुन्दचरणावाप्तिरूपिण्यां साध्यसिद्धौ साधीयान् विधिः ।

**हरिणी छन्दः** ।

( ६२ )

**श्रीराधे यदि मामिति** । हे श्रीराधे ! यदि जडं मोहग्रस्तमप्रज्ञं वा, दीनञ्च दरिद्रञ्च--ज्ञानदरिद्रं भावदरिद्रं धनदरिद्रं वापि, पादपतितं चरणशरणगतं माम-पारकरुणास्मेरैरपरिमितानुकम्पाभावविकसितैरपाङ्गैर्नयनाञ्चलैरवलोक्य कृपया निरीक्ष्य कार्तार्थ्यमापादयेः कृतकृत्यतां प्रापयेश्चेत्तदा दाक्षिण्याम्बुनिधेः सौजन्य-सिन्धुरूपायास्तव तावता कृपाकटाक्षपातमात्रेण कियत्किं हीयते ? न कापि न्यूनता कथमपि संपद्येतेति भावः । अत्र ह्यस्मिन्विषये भास्वान् सहस्ररश्मिर्लुप्त-भेदं यथा स्यात्तथाऽनिशं सततमभितः समन्ततो रश्मीन् स्वीयान् किरणान् प्रयुङ्क्त इति भास्वानेव निदर्शनम् ।

**अयमभिसन्धिः** । राधिकाकृपाकटाक्षपाताध्वनीनतां जिगमिषुः कविः प्रार्थयते हे राधे ! सत्यं नाहमधिकारी त्वल्लोचनगोचरविषयस्य मोहग्रस्तत्वाद्भा-

वशून्यत्वाच्च । तथापि यदि त्वं मादृशमनधिकारिणमकिञ्चनं स्वकीयैः कारुण्य-पूर्णैः कटाक्षैरवलोकयेस्तदैव तव वैशिष्ट्यम् । यद्यहमधिकारभागभविष्यं तदा तु स्वत एव तव दृष्टिपथमवातरिष्यम् । अनधिकारित्वादेव मया तव चरणौ श्रितौ, चरणाश्रितं त्वमवश्यं परित्रायेथा इति धिया । न चानधिकारिष्वपि कृपाकटाक्ष-पाते तु महती हानिरिति वाच्यम्, तव दाक्षिण्यसागररूपेण गीयमानत्वात् । नन्वीदृगाचरणे निदर्शनाभावान्नानुकरणीयोऽयं पन्था इति चेन्न, मरीचिमालिनो निदर्शनत्वेनोपस्थापितत्वात् । यथा दिवाकरो नगरे वा ग्रामे वा, हर्म्ये वा कुटीरे वा, परित्यक्तभेदभावं मयूखान् प्रसारयति, तथैव हे राधे ! त्वयाप्यधिकारिण्य-नधिकारिणि वा समं कृपाकटाक्षः पातयितव्यः । यथोक्तं भगवच्छ्रीशङ्कराचार्य-पादेन सौन्दर्यलहर्याम्—

"वने वा हर्म्ये वा समकरनिपातो हिमकरः", ५७ ।

यद्वा, अर्थान्तरेण भगवती राधा कविना भृशमुपालम्भं नीयते । यत्त्व-त्तस्तु भास्वानेव महीयान् यः समत्वेन व्यवहरति । यदि नाधुनापि मां कृतार्थतां निनीषसि तदा त्वया कोऽभिप्रायोऽस्माकम् । अतो हे राधे ! कृपया मामवलोक्य पाहि पाहि ! मम तु त्वमेव शरणम् ।

**रूपकालङ्कारः** । राधिकाया उपरि दाक्षिण्याम्बुनिधेरारोपणात् । **निदर्श-नालङ्कारश्च**, यथा भास्करो लुप्तभेदं स्वीयालोकं वितनोति तथैव त्वमपि लुप्त-भेदं वितनु कृपामित्यर्थः ।

**शार्दूलविक्रीडितं छन्दः** ।

## ( ६३ )

**उन्मेषो जगतामिति** । हे राधे ! तव रम्या रमणीयाक्षिच्छटा लोचन-विच्छित्तिर्विजयते सर्वोत्कर्षेण वर्त्तते । ननु कीदृशीयमक्षिच्छटेत्याह—जगताम-शेषभुवनानामुन्मेषः प्रादुर्भावो लयश्च ध्वंसश्च । परमलावण्यमयी चक्षुःकान्ति-रशेषलोकाविर्भावतिरोभावक्षमा यतो राधाया नयनोन्मीलनमात्रेण चतुर्दशभुवन-सर्गो नयननिमीलनमात्रेण च तत्संहार इत्याशयः । यद्वा, यावद्राधिकाचक्षुः-प्रसारपातिता तावत्सर्वविधैश्वर्यसमुल्लासः, तद्बहिःपातित्वे तु न खलु क्षेमस्या-वकाशः ।

अपि च, मुखमम्बुरुहमिय तस्य वदनारविन्दस्य सुषमा शोभा । राधि-कावदनपुण्डरीकस्य शोभा तन्नयनशोभावलम्बिनीति भावः । अथापि मुरारिमनसः श्रीकृष्णान्तःकरणास्यातिशय आकर्षः गरीयः खल्वाकर्षणम् । इयं नयनलक्ष्मीः श्रीकृष्णहृदयं तथैव बलादावर्जयति यथा ह्ययस्कान्तोपलः सूचिकामिति । अपि

च, तवाक्षिच्छटा शश्वदनिशं दयायाः करुणायाः सखी सहचरी। यतो निरन्तरं करुणाकल्लोलाः प्रवहन्ति। एवञ्च लीलाविशिष्टो यो विभ्रमो विलासस्तस्य शेवधेर्निधेरुत्पत्तिस्थानम्। राधिकानयनयोरेवाजस्रं सलीलं सर्वविधविलासनिधयः प्रादुर्भवन्ति। शान्तेः शमस्यापि प्रसूतिस्थलमुद्भवास्पदम्। अथ च पुनः कान्तीनां त्रिभुवनशोभापूगानां निकेतनं सदनमास्ते।

**अयम्भावः।** राधिकालोचनलक्ष्मीलावण्यविवर्णयिपुणा कविनाऽस्मिन्पद्ये भावगभीरया सरण्या नयनशोभासुन्दर्याः सप्तधा मनोहारि चित्रणं निरवर्ति। ग्रन्थकारेणात्र वार्षभानव्या लोचनयोर्विच्छित्तेश्छटायाः क्वचिज्जगदाविर्भावसमर्थत्वेन, क्वचित्स्वीयाननकमलकमलास्वरूपिणीत्वेन, क्वचिद्गोपीजनवल्लभगोपालमनोमोहिनीत्वेन, क्वचित्करुणासमानोदर्यात्वेन, क्वचिदशेषविलासनिधिसमुदयरसात्वेन, क्वचिच्छान्तिसमुद्भवोत्पत्तिस्थानत्वेन, क्वच्चिच कान्तिसदनरूपिणीत्वेन निरूपणमकारीत्यहो कमनीयकल्पनाचातुरीसौन्दर्यम्। राधिकालोचनलक्ष्मीकरुणासहोदरकृपापातास्पदीभूतो जनस्त्रितापशमयित्रीं शान्तिमधिगच्छतीति भावः।

**मालारूपकालङ्कारः।** एकस्मिन्नक्षिच्छटारूपे विषयेऽनेकेषां जगदुन्मेषप्रभृतीनां विषयिणामारोपणान्मालारूपकालङ्कारः।

**शार्दूलविक्रीडितं छन्दः।**

( ६४ )

**दुःखोद्रेकेति।** हे श्रीराधे! तवामृतरसस्य सुधानिस्यन्दस्य या झरी यः सानुमत्सानुनिपतन्नीरप्रवाहनिर्झरस्तस्या वर्षुका वर्षणशीला या अपाङ्गधारा धाराधरासारप्रपाता इव कटाक्षप्रवाहा अस्मान् त्वदेकशरणान् नोऽवन्तु रक्षन्तु। यथा पीयूषलवपानमात्रेणापि प्राणिनो निरामया भवन्तीति लोकप्रसिद्धिस्तथैवानवरतस्रुतसुधास्रोतःकल्पकटाक्षपातसम्पर्केण त्वच्चरणाश्रिता वयमप्यनन्ताशुभप्रारब्धोद्भूतभवामयनिराचिकीर्षैकबुद्धयस्त्वामुपास्महे।

ननु को हि नाम विशेषो राधिकापाङ्गधाराणामिति चेत्तत्प्रतिपिपादयिषयाऽऽह—दुःखानां प्रत्यात्मप्रतिकूलवेदनीयानामाध्यात्मिकाधिभौतिकाधिदैविकानां त्रयाणामुद्रेक एव प्रवृद्धिरेवाऽतिवात्या प्रचण्डवातसमूहस्तया विषम उच्चावचो यो भवमहासिन्धुः संसारमहासागरस्तस्य तरणे सत्कर्णधारा दक्षनाविकस्वरूपिण्यः। यथा कश्चिदेव नौचालनचतुरो नाविको झञ्झावातसंक्षोभितमहासागरतितीर्षायाममोघमनोरथोऽध्वनीनैः प्रशस्यते, तथव सांसारिकत्रिविधतापात्मकेन प्रचण्डेन

प्रभञ्जनेन संक्षुब्धो जगदर्णवः सत्कर्णधारास्वरूपिणीभी राधिकापाङ्गधाराभिस्त-रीतुं शक्यते ।

अपि च, स्वच्छन्दा स्वतन्त्रा येन्द्रादीनां देवराजप्रभृतीनां सम्पत्सम्पत्तिः सैव रुचिरा रमणीया नवनटी नवाचिरप्राप्तयौवना नटी नृत्यप्रिया शैलूषसुन्दरी तस्या नर्त्तने नर्त्तनव्यापारे सूत्रधारस्वरूपिण्यः । लोकेऽपि कश्चिदेव जायाजीवो नटवरः शैलाली स्वकीयां स्वच्छन्दविहरणप्रियां लासिकां नर्त्तयितुं क्षमते । एवमाखण्डलस्य परमलावण्यमयी सम्पन्नर्त्तकी सूत्रधारस्वरूपिणीभिरपाङ्गधारा-भिर्नर्त्यते । राधिकाकटाक्षपातान्तःपातीनि भूस्थानानि निर्जरेश्वरसम्पन्नर्त्तकी-क्रीडाङ्गणानि भवन्तीत्यर्थः ।

अपि च, अज्ञानस्य मोहान्धकारस्य योद्गाढा सघना वन्या वनततिस्तस्या द्रुतं द्रागेव दलनविधौ समुच्छेदनव्यापारे तीक्ष्णा निशिताः कौठारधाराः कुठारः परशुस्तस्येमा इति कौठार्यः कुठारसम्बन्धिधारास्वरूपिण्य इति यावत् । वात्येति वन्येति च पदद्वयं वातानां समूहो वनानां समूह इत्यस्मिन्नर्थे 'पाशादिभ्यो यः' पा० ४, २, २९ इति सूत्रेण यप्रत्यये कृते सति सिध्यति । यथा लोके घनीभूताना-मन्योन्यसंसक्तानां महीरुहाणां समूलमुन्मूलनेऽतीव तीक्ष्णाः कुठाराः प्रभवन्ति, तथैव प्रगाढाज्ञानान्धकारनिराकरणे कुठारधारास्वरूपिण्योऽपाङ्गधारा एव प्रभुः ।

**अयम्भावः** । अत्र कविः सुदृढं विश्वसिति यद् वृषभानुनन्दिन्याः पीयूष-वर्षिण्याः कटाक्षधारायाः सम्पर्केणेमास्तिस्रः क्रियाः प्रवर्त्तन्ते । (१) भवसागर-तरणम् । (२) महेन्द्रातिशायिसम्पदैश्वर्योपलब्धिः । (३) मोहान्धकारात्मका-ज्ञानारण्योन्मूलनम् ।

**मालारूपकालङ्कारः** । राधिकापाङ्गधारासु सत्कर्णधारत्वस्य, सूत्रधार-त्वस्य, कौठारधारत्वस्य च समारोपणादेकस्मिन्ननेकेषामारोपान्मालारूपका-लङ्कारः ।

**स्रग्धरा छन्दः** ।

( ६५ )

**राधे ते जयतीति** । हे राधे ! इह जगत्यां ते तव कोऽप्यनिर्वचनीयो महिमा माहात्म्यातिशयो जयति सर्वोत्कर्षेण वर्तते । यत्ते कटाक्षस्य नयनकोणस्य या छटा शोभा तस्याः पातस्य निपातनस्योपक्रम एव समारम्भ एव पङ्गुः श्रोणो-ऽप्यभितः समन्तादद्रिषु भूधरेषु जङ्घालाति जङ्घाल इवाचरति । अतिजवापर-पर्यायो जङ्घालशब्दस्त्वमरटीकायां श्रीभानुजीदीक्षितेनातिशयिता जङ्घास्येत्यर्थे 'सिध्मादिभ्यश्च' पा० ५, २, ९७ इति सूत्रेण लच्प्रत्ययान्तो निरूपितः । अनेन

राधिकापाङ्गपातसमकालमेव जङ्घाविरहितत्वेनैकमपि पदं गन्तुमक्षमः पङ्गुः नभःस्पृक्षु सानुमत्सु महता वेगेन प्रधावितुं प्रभवतीत्यर्थः। अपि च, मूकानामवाचामिन्द्रो मूकशिरोमणिर्गुरवति गुरुर्बृहस्पतिरिवाचरति। यो हि नाम परमजडः शब्दोच्चारणे सर्वथाऽकल्पत्वात्सोऽपि राधिकाकटाक्षपातेन वाचस्पतिवदात्मनश्चतुर्दशविद्यानिधानत्वं वागीशवाक्पाटवञ्च विज्ञापयति। अथ च, किम्पचानानां मितम्पचानामग्रणीः पुरोगमो द्राक् झटित्येवेन्द्रतितमामिन्द्र इवाचरति। किं कुत्सितं कस्मैचिदपि न दत्त्वा केवलमात्मार्थं पचतीति किम्पचानः कृपण इति शब्दकल्पद्रुमः। शानचि चानशि वा 'आगमशास्त्रमनित्यम्' इत्यनुशासनाद् 'आने मुक्' (पा० ७।२।८२) इति मुङ् न। कृपणजनमूर्धन्योऽपि नूनं वृन्दारकाधिभूसम्पदैश्वर्यभाक् सन् प्रमोदते। अपि च, अज्ञोऽनधीतवर्णविन्यासोऽपि प्राज्ञ इवाचरति। प्रजानातीति प्रज्ञः 'इगुपधज्ञाप्रीकिरः कः' पा० ३।१।१३५ इति कः। प्रज्ञ एव प्राज्ञः। प्रज्ञशब्दात् 'प्रज्ञादिभ्यश्च' पा० ५, ३, ३८ इत्यनेन स्वार्थेऽण्। प्राज्ञ इवाचरतीति प्राज्ञति—नामधातावाचारार्थे क्विप्। निगमागमपारावारपारदृश्वा पण्डितो भवति। एवञ्च, मार्गणो याचको धनदति धनं ददातीति धनदः कुबेरः, धनद इवाचरतीत्यर्थः। यः खलु निर्धनो नक्तन्दिवमिभ्यानां सदनान्यर्थिभावेनोपतिष्ठते, अलीकप्रशंसापटवति च, सोऽपि राधिकाकटाक्षपातमात्रेणैव पुण्यजनेश्वरायते।

यथोक्तं वैराग्यपञ्चके श्रीवेदान्तदेशिकेन—

**"काचाय नीचं कमनीयवाचा मोचाफलास्वादमुचा न याचे।**
**दयाकुचेले धनदत्कुचेले स्थितेऽकुचेले श्रितमाकुचेले॥"**

अपि च, व्यङ्गो विगतमङ्गं यस्येति हीनाङ्गोऽपि कुरूपः कुब्जो वा पुरुषः कन्दर्प इवाचरितुमारभते। रतिनाथरमणीयतां बिभर्तीति भावः।

**अयमर्थः।** राधिकानयनाञ्चलमाहात्म्यप्रतितिष्ठापयिषया कविरूपक्रमते—

(१) जङ्घाविरहितस्याप्यनायासं महाजवेन पर्वतशिखरोल्लङ्घनम्।
(२) रसनाविरसितस्य सुरगुरुवदाचरणशीलत्वम्।
(३) कृपणमूर्धन्यस्य त्रिदशर्षभानुकरणत्वम्।
(४) निरक्षरस्य पण्डितोत्तंसानुसरणत्वम्।
(५) याचकस्य वैश्रवणवदाचरणत्वम्।
(६) अङ्गहीनस्यापि च मकरध्वजवत्सर्वातिशायिसौन्दर्योपलब्धिः।

**क्विब्लुप्तोपमालङ्कारः।** जङ्घालति, गुरवति, इन्द्रति, प्राज्ञति, धनदति,

कन्दर्पतीति च प्रयोगेषु सर्वत्र 'सर्वप्रातिपदिकेभ्यः विवव्वा वक्तव्यः' वा० १७२२ इति वार्तिकेनाचारार्थे क्विप् प्रत्ययविधानात् ।

**शार्दूलविक्रीडितं छन्दः ।**

( ६६ )

**श्रितार्त्तीति ।** हे राधे ! यत्र क्वचित् यत्र क्वापि यदृच्छया स्वैरभावेनापि तव दृशा दृष्टिः पतति, तत्र तत्राखिला निःशेषाः शुभसम्पदो माङ्गलिकैश्वर्यपरम्पराः सपदि तत्क्षणं द्रवन्ति धावन्ति । विशेषाभिप्रायमन्तरा स्वातन्त्र्येणापि राधिकादृष्टिपातसमकालमेवातिशयितभुवनलावण्यसुषमा निखिलाः कल्याणिन्यः कमलारमण्योऽहमहमिकया धावितुमारभन्त इत्यर्थः । दृशेति पदस्याबन्तत्वं तु "वष्टिभागुरिरल्लोपमवाप्योरुपसर्गयोः । आपञ्चैव हलन्तानां यथा वाचा निशा दिशा" इति भागुरिमतेन सिध्यतीति ज्ञेयम् ।

ननु कीदृशीयं दृशेति चेदाह—श्रितानां राधिकाचरणशरणङ्गतानां याऽऽर्त्तिर्भवाटवीत्रितापपीडा तस्या हरणाय निराकरणायोद्यतैः सततं सन्नद्धैरपाङ्गकैः सह । अपाङ्गकैरिति तृतीयाबहुवचनान्तं पदं करणदले योजनीयम् । अनया दृशया चापाङ्गकैः सहवर्त्तिन्या भाव्यम् । राधिकालोचनकटाक्षा नूनं प्रपन्नपीडापाकरणचुञ्चवः । अपि च, अमृतं पीयूषमेव सारं जलं तस्य नीलाम्बुदा इव येऽपाङ्गकास्तैः । लोकेऽपि यथा वर्षुकेषु पयोधरेषु पयःपूरितत्वादेव नीलिमा सन्निधत्ते, तथैव राधिकाकटाक्षाः पीयूषपूर्णा वर्षणोन्मुखा जलधरा इव । यथा लोके धाराधराणां धारा नैदाघचण्डातपप्रखरतापपरिदेवितानां तापप्रशमयित्र्यस्तथैव सुधास्तनयित्नूनामपाङ्गानां धारास्त्रितापपरिदेवितानां तापप्रशमयित्र्यः । अमृतं हि नाम नास्ति मृतं मरणं यस्मात्तदिति, तत्पायिनां मरणाभावात् । तेन च पीयूषप्रस्राविणीनामपाङ्गमेघधाराणां सम्पर्केण सर्वविधतापनिराकृतिः सङ्गच्छते । अपि च, उषसि प्रत्यूषेऽलियुतानि मधुकरसहितानि यान्युन्मिषन्ति विकसन्ति नलिनानि सरसिजानि तद्वत्सुन्दरा येऽपाङ्गकास्तैः । लुप्तोपमालङ्कारः । यदा प्रातःकाले दिवाकरकरस्पर्शरोमाञ्चपुलकितानि कमलदलानि विकसन्ति तदा कज्जलमया इव, मूर्त्तीभूतकालिन्दीनीरखण्डा इव वा यथा भ्रमरा उड्डीयन्ते, तथैव निपातनविधौ राधिकानयनकमलदलोन्मीलनेनेतस्ततः परिभ्रमन्त्यः कृष्णकृष्णाः कनीनिकाश्चञ्चद्द्विरेफा इवोत्प्रेक्षिताः । यथा प्रभाते समुन्मीलत्स्विन्दीवरदलेषु मधुकरसाहचर्येण शोभातिशयः प्रादुर्भवति तथैवात्रापि सर्वातिशायिन्या राधिकानयनसुषमायाः शोभातिशय इति भावः ।

**अयमभिप्रायः ।** राधिकादृष्टिपातसमकालमेव सर्वविधैश्वर्योपलब्धिः संजा-

घटीतीति द्रढीयान् कवेः प्रत्ययः। एतादृश्या दृष्टेः कटाक्षास्त्रिधात्र संवर्णिताः। यथाहि—

(१) कटाक्षाणामशेषपीडानिराकरणनदीष्णत्वम्।

(२) अमृतवर्षणक्षमत्वम्।

(३) मधुकरसहितारविन्ददलशोभाधायकत्वम्।

**पृथ्वी छन्दः।**

( ६७ )

**माहात्म्यातुलेति।** हे मुकुन्दप्रिये श्रीराधे ! तवायं नेदीयान् महान् लीलावीक्षणमेव स्वेच्छानिरीक्षणमेव कुम्भजः कुम्भाज्जातोऽगस्त्यमुनिरस्मानलं यथा स्यात्तथा पर्याप्तं रक्षतु। अगस्त्यस्य कुम्भादुत्पत्तिविवरणं तु रामायणोत्तर-काण्डे (६६-६७ सर्गे) महाभारते च (१, १३१, ६-१४) अनुसन्धेयम्।

ननु कीदृशोऽयं राधिकालीलानिरीक्षणकुम्भज इति चेदाह—माहात्म्यस्य महिम्नोऽतुलोऽप्रतिमः शेवधिर्निधिः। पौराणिकपरम्परायामगस्त्यस्य महान् महिमा सुप्रथित एव। एवमेव यत्र क्वापि सलीलं राधिकावलोकितानि पतन्ति तत्रैव राधिकाचरणोपासको भक्तो नितान्तमनवद्यं स्वसदृशान्तरशून्यं महिमानमधि-गच्छति।

अपि च, सुदुर्लङ्घ्योऽतीव दुःखेन लङ्घयितुं योग्योऽतिलम्बः संस्पृष्टपूर्वा-परतोयनिधिप्रान्त इव लम्बमान उच्छ्रितो व्योमान्तःस्पृक्त्वादतीवोन्नत एतादृशः प्रोद्यन् प्रकर्षेणोदयं प्राप्नुवन् यः संसृतिविन्ध्यः संसारविन्ध्यमहीध्रस्तस्य कुण्ठन-कलया वित्तोऽतीव दक्ष इति कुण्ठनकलाचुञ्चुः। "तेन वित्तश्चुञ्चुप्चणपौ" पा० ५।२।२६ इत्यमेन चुञ्चुप् प्रत्ययः। राधिकापक्षे, कविर्मनुते यत्संसारात्म-कोऽयं विन्ध्याचलो लम्बिष्ठत्वादुच्चैस्तरत्वात्सततमुदयोन्मुखत्वाच्च सांसारिकैः सुखेन कथमपि लङ्घयितुं न शक्यते। तदेव राधिकानयनपातात्मकः कुम्भजो द्रुततरं साधयति।

अगस्त्यपक्षे, पूर्वं प्रोद्यन् विन्ध्याचलो भास्करस्य पन्थानं प्ररुरोध। रवि-प्रार्थनया च कुम्भजन्मा विन्ध्याद्रिं निम्नशृङ्गिणमकार्षीत्। कुम्भजेन विन्ध्या-चलस्य निम्नशृङ्गत्वापादविषयिणी कथा तु वामनपुराणान्तर्गतदेवीमाहात्म्ये नारदपुलस्त्यसंवाद इत्थं संवर्णिता—पुरा विन्ध्याद्रिर्गगनेचरस्य दिवाकरस्य पन्थानमरौत्सीत्। ततो मरीचिमाली साञ्जलिबन्धं कुम्भभवमुपेत्याचचक्षे—देव ! विन्ध्याचलनिरुद्धपदवीकस्य मम भवानेव शरणम्। एवमभ्यर्थितः कुम्भजः गृहीत-स्थविरकलेवरो जीर्णकायत्वाच्छक्तिहीनत्वाच्च स्वात्मनोऽत्युन्नतमहीध्ररोहणाक्ष-

मत्वं प्रबोधयन् गिरिवरं नीचशृङ्गिभावायाज्ञप्तवान्, धौतवपुषश्च स्वात्मनः प्रत्यागमनकालं यावत्तादृशीं स्थितिमचीकमत । ततःप्रभृति महर्षेर्भयात्पर्वतोऽयं वृद्धिं न यातीति । वामनपुराणम्, देवी माहात्म्येऽष्टादशोध्यायः ।

अपि च, गोविन्दस्य योऽमितो मातुमयोग्योऽपारो यो धैर्यसिन्धुस्तस्य चुलुकक्रीडायां प्रसृतिग्राहमाचमनक्रियायां पटीयानास्ते । अतिशयेन पटुरित्यर्थे पटुशब्दात् "द्विवचनविभज्योपपदे तरबीयसुनौ" पा० ५, ३, ५७ इत्यनेनेयसुन् बोध्यः । राधिकावीक्षणपक्षे, श्रीकृष्णस्यातुलितगाम्भीर्ययुतो धैर्याम्भोनिधिः श्रीराधावलोकनमात्रेण प्रसृतिपूरकपयःपानवदाचमनीक्रियते । कुम्भजपक्षे, कुपितेनागस्त्येन सम्पूर्णः सागरः पीत इति महाभारतं प्रमाणम् । महाभारतम् ३, १०५, १-६ ।

**अयमर्थः** । कवेरभिप्रायेणात्र कुम्भजद्वयं परिकल्पतमास्ते । एकः कुम्भजः पौराणिक्यां परम्परायां प्रथितयशा अगस्त्यनामा महामुनिः । यस्य कुम्भादुत्पत्तिस्तु विदितैव पुराणतत्त्वविदाम् । अयमेव विन्ध्याद्रिं कुण्ठीचकार, सागरञ्चाचचाम । अतएवास्यातुलमाहात्म्यनिधित्वं शास्त्रेषु प्रख्यापितम् । अपरः कुम्भजः प्रस्तुते राधावीक्षणस्वरूपः । अयमपि संसारविन्ध्याद्रिं कुण्ठीकरोति, श्रीकृष्णधैर्यवारांनिधिञ्चाचचामेति द्वयोः साम्यम् ।

**परम्परितरूपकालङ्कारः** । तद्यथा—लीलावीक्षणमेव कुम्भज इति राधिकाया लीलावीक्षणेऽगस्त्यत्वारोपणात्केवलनिरङ्गरूपकम् । संसृतिरेव विन्ध्य इत्यत्रापि केवलनिरङ्गरूपकम् । एवं वीक्षणे कुम्भजत्वारोपणमन्तरा संसृतौ विन्ध्यत्वारोपणस्यासङ्गत्वाद् द्वयोरपि रूपकयोरन्योन्याश्रितत्वात् परम्परितरूपकालङ्कारः ।

**व्यतिरेकालङ्कारश्च** । तद्यथा—पुराणप्रसिद्धः कुम्भजस्तु केवलं विन्ध्याचलावरोधनचणः । नयनकुम्भजस्तावत्संसारावरोधनक्षम इति तस्मादुत्कर्षप्रतिपादनात् । अपि च, तस्य पीताब्धित्वादस्य च पीतगोविन्दधैर्यसागरत्वाद्विशेष इति व्यतिरेकः ।

**शार्दूलविक्रीडितं छन्दः** ।

## ( ६८ )

**उन्मीलत्सुरशाखीति** । हे कारुण्यपूर्णे ! अनुकम्पाप्रपूरितान्तःकरणे श्रीराधे ! त्वां नुमः प्रणमामः । अत्र "समुन्मार्जिते",—"छविपदत्राणे", "अतिमात्रनिपुणे" इति त्रीणि पदानि सम्बोधनान्तस्य "कारुण्यपूर्णे" इति पदस्य विशेषणानि । तद्यथा—उन्मीलन्ति प्रस्फुटन्ति सुरशाखिनां कल्पपादपानां यानि रम्याणि

रमणीयानि कुसुमानि पुष्पाणि तेषां य आमोदः सर्वतः प्रसृतः परिमलस्तस्य या ऋद्धिः समृद्धिस्तया सहिता ये धम्मिल्लकानां केशरचनाविन्यासविशेषाणां प्राग्भाराः शीर्षप्रदेशास्तैः। करणदले योजनीयमिदं पदम्। सुरसुन्दरीभिर्निर्जर-सीमन्तिनीभिर्भक्त्या सभक्त्युन्मेषं समुन्मार्जिते शनैः शनैः सम्यक्परिमार्जितकलेवरे! अहो नु खलु कियानयं महिमा श्रीप्रियाया यत्तच्चरणपिस्पृक्षया देवाङ्गना विक-सितविकसितैर्हृदयावर्जकैर्विप्रसारिसौरभपुञ्जैः कल्पद्रुमपुष्पस्तवकैः समुल्लसद्भि-र्धम्मिल्लविलसितकुन्तलकलापप्रान्तभागैः श्रीप्रियां समन्ताद् वीजयन्ति। एतेन स्वाजस्रप्रणयनव्यापारयुक्तत्वं श्रीप्रियादासीत्वञ्च द्योतयन्ति।

अपि च, कंसं द्वेष्टीति कंसद्विट् श्रीकृष्णस्तस्य या रमण्यो लावण्यमञ्जू-षास्वरूपिण्यः सुन्दर्यस्तासां कुण्डलेषु खचिता ये मणयो विद्रुमपद्मरागमुक्ताफल-प्रभृतीनि दिव्यरत्नानि तेषां या छविः कान्तिस्तया पदयोस्त्राणं यस्यास्तत्सम्बुद्धौ हे छविपदत्राणे राधिके! नन्दनन्दनस्य भगवतो मुकुन्दस्य सर्वा अप्यन्याः कामिन्यो यदा राधिकाचरणप्रणिनंसया प्रह्वीभवन्ति तदा तासां मुकुटकर्णाभरणेषु खचितानां महारत्नानां प्रसर्पन्ती कान्तिरेतादृशीं प्रतीतिं प्रादुर्भावयति यथा राधिकापादपद्मे मग्नांशुकदुकूलाञ्चलावृते इव भवेताम्। अपि च, जगतः प्राणान् बिभर्तीति जगत्प्राणभृत् श्रीकृष्णस्तस्य कल्याणाचरणे माङ्गलिकव्यापारापादनेऽ-तिमात्रं निपुणेऽतीव दक्षे हे राधिके! त्वां नुमः।

**अयम्भावः।** भगवतीं वृषभानुनन्दिनीममरसुन्दर्यः कल्पतरुसुमनः-सौरभान्वितधम्मिल्लकानां सुकुमारतरैरग्रभागैरुपासते। अथ च, वैशिष्टचत्रयं तस्याः। श्रीकृष्णस्य निखिलाः सीमन्तिन्यः सततं प्रणामवेलायां स्वकिरीट-कुण्डलखचितमाणिक्यमुक्ताफलादिमहारत्नत्विड्भिस्तच्चरणपाथोजे समावृण्वत्य-स्तस्या मुकुटमणित्वं प्रचिख्यापयिषन्ति। इयं पुनस्त्रिजगदाधारनरकरिपुभद्रा-चरणचणेत्यहो महिमातिशयः। अथ चेयं करुणामञ्जूषावपुरिति वयमप्युपतिष्ठा-सामहे।

**प्रेयोऽलङ्कारः।** राधिकानिष्ठः कविहृद्गतः प्रेयोभावोऽभिव्यज्यत इति प्रेयोऽलङ्कारः। भावस्याङ्गत्वे प्रेयो भवति।

**शार्दूलविक्रीडितं छन्दः।**

( ६६ )

**दृक्पातास्पदतामिति।** हे राधे! त्वं मामपि दृक्पातस्य नयननिपातन-स्यास्पदं स्थानं तस्य भावस्तां नयेः प्रापयेः। मामपि नयनगोचरविषयमापादये-रिति प्रार्थये। न च तवैतावान् सुकृतसञ्चयो, येन राधिकानयनाञ्चलपात-

विषयतावाप्तिरिति वाच्यम्, तस्या महोदारतामूर्त्तिरूपेणोपस्थापितत्वात्। यथाहि, यदि त्वं मामवलोकयेश्चेत्तदा महोदारताया मूर्त्तेस्ते कियद्देयम्? न किमपि देयमित्याशयः। यद्वा, यदि मादृशमपुण्यभाजं पश्येस्तदैव तव महोदारतामूर्त्तित्व-चारितार्थ्यम्। यद्वा, हे राधे! अस्मद्धिया तु महोदारतैव त्वद्रूपेण धृतविग्रहा। एतादृशी त्वं यदि त्रिचतुरान् पञ्चषान् वा कटाक्षपातकृपाम्बुकणान् विकिरेस्तदा तव न किमपि नङ्क्ष्यति। लोकेऽपि कस्मैचिन्निर्धनाय द्वित्राणां मुद्राणां दानेन पद्मनिधेः शङ्खनिधेर्वा न किमप्यपहीयते। तत्रापेक्षा तु नूनं केवलं दित्सायाः।

अपि च, औदार्यजुषस्तावदुदारतामन्दाकिनी पर्जन्यवर्षणन्यायेन पुण्य-वत्यपुण्यवति वा समत्वेन प्रवर्त्तते। एतत्कृपाकटाक्षपातविषयतानयनं तव कृते नगण्यमास्ते, किन्तु मम कृते तु तदेव परं वैभवं परमोत्कर्षः सम्पत्स्यते। यथा कोऽप्यर्णोनिधिरर्णसां जलानां निधिर्भाण्डारः पयःपारावारो द्वित्रान् वारिकणान् द्वित्रजलबिन्दून् न गणयति किमपि नाकलयति, किन्तु त एव नगण्या अपि जल-कणाः पुनः शुक्तौ स्वतो निपतिता अपि सर्वथाऽनिच्छयापि गताः सन्तः सत्वरं पातसमकालमेव मुक्तात्मतां मौक्तिकस्वरूपतामश्नुवते प्राप्नुवन्तीत्यहो चमत्कृति-र्द्वित्राणामपि नीरकणानाम्। यथाहि,

**"जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य।"**

मालविकाग्निमित्रम्, १,

**दृष्टान्तालङ्कारः।**

**शार्दूलविक्रीडितं छन्दः।**

( ७० )

**विशदरदेति।** हे हरिसहचरि हे मुरारिसहजवयस्ये श्रीराधे! एतत्ते मुक्ताफलं कम्पं विन्दते। कीदृशं तदिति चेच्छ्रूयताम्—विशदा अत्युज्ज्वला रदा दन्ताः सपत्ना इव शत्रव इव तेभ्यस्त्रस्तं भीतं मुक्ताफलं मौक्तिकम्। राधिकाया नासिकायामलङ्काररूपतामुपगतं मौक्तिकमत्र भङ्ग्यन्तरेणोवर्णितं कविना। तथाहि—एतत्खलु स्वकीयेन धवलिम्ना भृशं गर्वितमासीत्। किन्तु यदा मन्द-स्मितवेलायां राधिकाया अनाविलानां दशनानां दर्शनं समजनि तदा तादृक्छ्वेति-मादर्शं चूर्णायितदर्पाङ्कुरं मुक्ताफलमदिधाविषीत्। कुत्राप्यन्तर्बुभूषुः शरणजि-घृक्षयाऽऽरात्समीप एव नासिकारन्ध्रं सवेगं वेगेन सहितं यथा स्यात्तथा प्रविश-दिवासीत्। किन्तु तत्रापि वराकमिदं मुक्ताफलं श्वसनः श्वासवायू रिपुरिव तेन निरस्तं राधिकायाः श्वासरूपेणान्येन शत्रुणा तत्कालमेव नासिकाया बहिर्निरस्तम्। राधिकाश्वासस्य शत्रुत्वेनोत्प्रेक्षणं तु दलितधावल्यदर्पस्य मुक्ताफलस्य धिक्कार-

विषयकम् । अधुना सर्वथा लज्जितं त्रस्तञ्च मुक्ताफलं यदा कुत्रापि शरणं नाशिष्ट तदानन्यगतिकतया पुनर्नासिकायां लम्बमानं सञ्जातम् । एतादृशञ्च सदपत्रपातो लज्जावशात्कम्पं विन्दते वेपथुं लभते ।

अयमर्थः । पुरा राधिकाया नासिकायां लम्बमानं मौक्तिकमतीव गर्वितं सञ्जातं यदहो नान्यः कोऽपि मत्तः शुक्लतरः पदार्थस्त्रिलोक्यामिति । मदीय एव श्वेतिमा सर्वानतिशेते । इत्थं गर्वितेन तेनैकदा राधिकामन्दस्मितेन हेतुना धवलातिधवलदशनपंक्तिरवालोकि । तद्दर्शमेव समूलकाषङ्कषिताहङ्काराङ्कुरं सद् दिधाविषया तिरोबुभूषया चासन्ननासिकारन्ध्रं प्राविशत् । दैवदुर्विपाकात्तत्रत्येन श्वासरिपुणा सार्धचन्द्रं निष्कासितञ्च तत्रैव भीतिवेपथुमता वपुषा प्रचकम्पे । एवमत्र राधिकाया नासिकायां लम्बमानस्य मुक्ताफलस्य शत्रुद्वयं परिकल्पितमास्ते । प्रथमः शत्रू राधिकादन्तरूपः । एतेषां मन्दस्मितद्विगुणितधवलकान्तीनां रदनानां निर्मलया कान्तिच्छटया पराजितं सद् यदा मौक्तिकं नासिकाशरणं जिघृक्षति तदा निःश्वासरूपेण द्वितीयेन शत्रुणा बहिर्निष्कासितमिति हन्त नूनमनुकम्पेत दयार्द्रं मनो मौक्तिकानुरागिणां सचेतसाम् ।

उत्प्रेक्षालङ्कारः । रदाः सपत्ना इवेति, श्वसनो रिपुरिवेति चेवशब्देन सूच्यमान उत्प्रेक्षालङ्कारः । सवेगं प्रविशदिवेत्यत्र च क्रियोत्प्रेक्षालङ्कारः ।

मालिनी छन्दः ।

( ७१ )

**प्रोत्कृष्टा इति** । हे रावे ! इतरत्रेतरस्मिन्क्षेत्रे ब्रह्मादयो विबुधा ब्रह्मेन्द्र-वरुणकुबेरप्रभृतयोऽमृतान्धसोऽस्मदस्मदपेक्षया प्रकर्षेणोत्कृष्टा उत्कर्षजुषः सन्तु भवन्तु नाम । परं किन्तु तवाभिवादनविधौ त्वत्प्रणमनक्रियायां तु तेषु त्रिदशेष्व-स्मासु साधारणभक्तेषु च न काचिद्भिदा कोऽपि भेदो नास्ति । सत्यम्, चतुर्मुख-प्रजापतेश्चतुर्वेदपारङ्गमत्वम्, महेन्द्रस्य सर्वदेवाधिपतित्वम्, धूर्जटेः सर्वलोक-प्रलयङ्कारित्वम्, कुबेरस्य वा नवनिधिनिधानत्वं भवतु नामैतादृशं वैशिष्ट्यं स्वकीये स्वकीये क्षेत्रे । किन्तु देवानामस्माकञ्च त्वच्चरणवन्दनवेलायां सर्वथा साम्यमेव निर्दिधारयिषामः । एतदत्र दृष्टान्तेन समर्थ्यते—खद्योतश्चेन्दुश्च खद्यो-तेन्दू तयोर्यन्महस्तेजस्तस्यापकृष्टिरतिशयश्चापकर्षोत्कर्षाविति केवलं निशि गाढ-तिमिराच्छन्नायां रजन्यां भवेताम् । एकस्य तेजसो न्यूनता, अपरस्य चातिशय इति न्यूनाधिक्ये यदि तमिस्रायां संदृश्येते तदा संदृश्येताम् । किन्तु दिवसे प्रोच्चण्डः प्रचण्डो योऽर्कश्चण्डातपः सूर्यस्तस्य करद्युतौ सत्यां मयूखालोके प्रसृते सति तयोः प्रभाकीटकुमुदबान्धवयोः को विशेषः । न कोऽपि विशेष इति भावः ।

एवमेवास्मासु सामान्यजनेषु चतुर्मुखमुखेषु च देवप्रवरेषु हे श्रीराधे ! त्वद्वन्दनातिरिक्तक्षेत्रे यदि भेदो विलसति तदा विलसतु नाम, किन्तु यावत्त्वच्चरणनमनान्वयस्तावत्तु वयं विबुधाश्च समानकोटिमवगाहामहे ।

**अयम्भावः** । यथा तमःपटलपुञ्जीभूतायां तमःस्विन्यामयोदण्डाघातेनाश्मनः समुच्छलन्तो दूरादवलोक्यमानाः पावकस्फुलिङ्गा इव, नभःपतिता अभ्रंलिहपादपशिखरेषु क्षणस्थायिनः सहसैवाधोऽवकीर्यमाणास्तारागणस्तोमा इव शुभ्रांशोरपेक्षया हीनकान्तिजुषो ज्योतिरिङ्गणाः समवलोक्यन्ते, तथैवान्धकारजलनिधिपानकलाचुञ्चुः कलशभूरिव कलानिधिः स्वेन कौमुदीमहसा न्यक्कृततमोज्योतिर्महाः स्वतेजःप्रकर्षप्रचिख्यापयिषया चन्द्रिकाकिरणतन्तुपटाञ्चलवितानं तन्वीत चेन्नास्माकं कापि विप्रतिपत्तिः । अनयोरेव स्वतेजःप्रसरपरिमण्डितभुवनान्तराले प्रचण्डभानौ नास्त्यल्पीयानप्युत्कर्षविशेष इति दिक् ।

**दृष्टान्तालङ्कारः** । यथा खद्योतचन्द्रयोस्तमिस्रायामपकृष्टचतिशयौ दृश्येते तथैवास्माकं देवानाञ्च स्याताम् । किन्तु त्विषाम्पतिप्रकाशे यथा तयोः साम्यं तथैव राधिकासन्निधावस्माकं ब्रह्मादीनाञ्च न किमपि तारतम्यमिति दृष्टान्तप्रदानात् ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७२ )

**केशान् गाढतम इति** । हे राधे ! **गाढतमः** संघनतिमिरपुञ्जस्तव केशान् कुन्तलानाश्रयदाशिश्रियत् । लोके हि गाढतमस्तिमिरपटलमज्ञानान्धकारञ्च दोषत्वेनाकलयन्ति जनाः, किन्तु राधिकाशरणागतया तदेव तमो गुणत्वेन परिणतम् । तमःश्यामैव चिकुरवीथी समाद्रियते, इति भावः । **कुटिलता** भ्रुवावाश्रयदाशिश्रिये । कौटिल्यमवधीर्यते लोके, किन्तु कुटिले वक्रे एव भ्रुवौ रमणीये स्तः । **रागोऽधरमाश्रयत्** । लोकेऽपि रागो मोहस्तत्त्वविद्भिस्तिरस्क्रियते, किन्त्वधरो रागोऽरुण एव शोभते । **मुग्धताऽऽस्यमाश्रयत्** । मुग्धता मूर्खता धिक्क्रियते, किन्तु मुग्धं मनोमोहकं मुखं मूर्धन्यं भवति । **चञ्चलताऽक्षिणी** आश्रयत् । चञ्चलता हि नाम चित्तस्यास्थिरा वृत्तिः, सा तु निराद्रियते वेदान्तादिशास्त्रेषु, किन्तु कामिन्या नयनयुगली तु मीनचञ्चलैव चित्तं चमत्करोति । **कठिनतोरोजावाश्रयत्** । कठिनता पारुष्यं कस्मैचिदपि न रोचते, किन्तु स्त्रियाः कठोरादेव स्तनौ लावण्यसूचकावभिमन्येते । **क्षीणता** कटिमाश्रयत् । क्षीणता निर्बलता बालेनापि धर्षयितुं योग्या न केनाऽप्यनुमन्यते, किन्तु कटिः क्षीणा तन्व्येव रुचिरा । **मन्दगतित्वञ्च** पादावाश्रयत् । मन्दगतिरालस्यं दीर्घसूत्रित्वञ्च सूचयति, किन्तु

कामिन्याश्चरणयोर्मन्दगतिः सौन्दर्याऽऽधायिकेति विदितमेव समेषाम् । अहो आश्चर्यम् । त्वदङ्गाश्रयात्तव कस्याप्यङ्गस्य शरणागतिमात्रेणैव दोषा लोके दोषत्वेन परिगणितान्यपि वस्तूनि राधिकाङ्गस्पर्शसमकालमेव सद्गुणतां प्राप्ताः स्वकीयं सद्गुणत्वं प्राप्नुवन्ति । अपि च, हे श्रीराधिके ! गुणभावङ्गता दोषाः सुतरां धन्यताङ्गताः प्रयाताः सन्तः कृतकृत्यमिवात्मानमाकलयन्ति ।

अयम्भावः । एकस्मिन् समये सांसारिका अष्टौ दोषा भगवतीमुपास्य बद्धाञ्जलयो बभाषिरे, हे देवि ! सर्वत्र वयं धिक्क्रियामहे । साम्प्रतं त्वां याचामहे । त्वमेव नः शरणम् । करुणाप्लावितान्तःकरणा हि राधिका स्वीयान्यङ्गानि निरदिक्षत् । तेऽपि तान्याशिश्रियिरे । आश्रयग्रहणकालादेवामी दोषा गुणत्वेन परिणताः सन्तः समेषां प्रशंसाभाजनतां भजन्तीत्यहो त्रिलोकातिशायिनी शक्तिरैश्वरी श्रीप्रियायाः ।

यथा दोषा राधिकाशरणङ्गतत्वाद् गुणाः संवृत्तास्तथैव प्राक्तनाशुभप्रारब्धोद्भूतदोषभाजो वयमपि राधिकाशरणगतित्वेन हेतुना सद्गुणतां धन्यताञ्चाधिगन्तुं कामयामहे, इति ध्वनिः ।

**तुल्ययोगितालङ्कारः** । आश्रयरूपस्यैकस्य साधारणधर्मस्य प्रकृतैरनेकैः पदार्थैः सह सम्बन्धात्तुल्ययोगिता । **विषमालङ्कारश्च** । दोषाणां नैसर्गिके दोषरूपावस्थानत्वेऽपि राधिकाया अङ्गस्पर्शेन गुणत्वसंप्राप्तिरिति विषमालङ्कारः । दोषप्रतिपादकेष्वष्टसु पदेष्वभ**ङ्गश्लेषालङ्कारश्चे**ति त्रयाणां मिथो निरपेक्षतया संसृष्टिरलङ्कारः ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७३ )

**कन्दर्पोद्धुरेति** । हे राधिके ! तेऽपाङ्गो लोचनप्रान्तभागो नस्त्वत्स्तुतिरतानस्मान्सदाऽवतु संरक्षतु । ननु कीदृशोऽयं राधिकापाङ्ग इति चेदाह— कन्दर्पस्य पुष्पधन्वनो य उद्धुर उद्दामो विभ्रमो विलासस्तस्य यो व्यतिकरो व्यसनं तस्य यो व्यूहः सैन्यस्य विशेषक्रमेण स्थापनं तस्य कृते दर्पाङ्कुरः खल्वयमपाङ्गः । युद्धार्थं स्वीयस्य सैन्यस्यैकस्मिन् विशेषक्रमे शत्रुभिर्दुर्लङ्घ्यत्वनिमित्तं संस्थापनं व्यूहः । तथाहि शब्दकल्पद्रुमोद्धृतशब्दरत्नावल्याम्—

**"समग्रस्य तु सैन्यस्य विन्यासः स्थानभेदतः ।**
**स व्यूह इति विख्यातो युद्धेषु पृथिवीभुजाम् ॥"**

यदा मीनकेतनः स्वकीयेन निरवग्रहेण विलासव्याजेन व्यूहरचनां विरचय्य युद्धाय

प्रवर्त्तते तदा यदि दर्पपूर्णोङ्कुरः कश्चिदास्ते सोऽयं भगवत्याः श्रीराधाया अपाङ्ग एव । श्रीप्रियाया अपाङ्ग एव रतिपतिं पराजेतुममोघमनोरथो विजयते ।

अपि च, फुल्लानि विकसितानि यानीन्दीवराणि नीलोत्पलानि तेषां या दिव्या रम्या च सुषमा शोभा तस्या यः स्तोमः समूहस्तस्य कृते निन्दाङ्कुरः । इयं राधिकापाङ्गसुन्दरी समेषां नीलोत्पलदलानामलौकिकीं रमणीयां शोभा-सुन्दरीं स्वकीयेन सर्वोत्कृष्टेन सौन्दर्येण निन्दन्ती जयति । अत्रापि न केवलमेकस्या इन्दीवरसुन्दर्याः सौन्दर्यदर्पदलनमपि तु सर्वासां नीलकमलसुन्दरीणां युगपद् दर्प-दलनमिति विशेषः । तद्यथा, अहो ! एतावानेव युष्माकं सौन्दर्यदर्पः, यो हि नाम केवलमेकेनैव मामकीनेन कटाक्षेण समूलमुत्पाटितः । राधिकाया लोचन-सुषमायाः समक्षे का नाम सुषमा फुल्लेन्दीवरदलानामिति भावः । अपि च, नानाजन्मसु समुच्चित एकत्रीभूतो योऽमितानामनन्तानां तमसां पापान्धकाराणां व्रातः समूहस्तस्य कृते दीपाङ्कुरः। यथा दीपे प्रज्वलिते घनतिमिरराशिः पलायते, तथैव राधिकापाङ्गे समुदिते पापानां परम्परा विलीयन्ते । अथ च, व्रजभुवां व्रजवासिनां कृते भाग्याङ्कुरः । राधिकाकृपाकटाक्षपातमात्रेणैव व्रजमण्डले लब्ध-जन्मनां जनानां सर्वविधभागधेयसमुल्लासो विलसति ।

**अयम्भावः** । ग्रन्थकृदत्र राधिकापाङ्गं स्तौति । अयमपाङ्गो मन्मथस्यो-न्मुक्तविलासव्यसनसैन्यविन्यासप्रकारस्य भेदनाय दर्पाङ्कुरः । अनेनापाङ्गस्तो-तॄणां कामसंस्कारध्वंसध्वनिः । योगशास्त्रे सर्वप्रथमं दमो मनोनिग्रहश्चापेक्ष्येते । राधिकापाङ्ग इन्द्रियाणां विषयेभ्यः प्रत्याहारपूर्वकं कामवासनानिरसनपटुः । कामजयेन च मनःपुण्डरीकं विकसतीति तत्त्वम् । निन्दाङ्कुरपदेन श्रीप्रिया-पाङ्गस्य सर्वातिशायिशोभाऽऽधायकत्वं ध्वन्यते । अलौकिकसुषमादर्शे मनः प्रसी-दति । मनःप्रसादेन च पापोन्मूलनम् । दीपाङ्कुरत्वेन भक्तानां जन्मजन्मान्तरपापा-न्धकारनिराकरणत्वम् । पापान्धकारनिवृत्तौ सत्यां सर्वविधभाग्योदयोपलब्धि-रिति दिक् ।

**मालारूपकालङ्कारः** । एकस्मिन् राधिकापाङ्गरूपे विषयेऽनेकेषां दर्पाङ्-कुरनिन्दाङ्कुरदीपाङ्कुराणां विषयिणामारोपणात् ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७४ )

**सायं स्वल्पेति** । श्रीराधिकायाः स्तुतिमातत्य साम्प्रतं श्रीकृष्णं स्तोतुं प्रवर्तते कविः । हे हरे ! ते गावो मे त्वदेकचिन्तनपरायणस्य मम शुभानां मङ्ग-लानां ततीः परम्परा आतन्वतां विस्तारयन्तु । आतन्वतामिति तनोतेरात्मनेपदे

लोटि प्रथमपुरुषबहुवचनान्तं रूपम् । कीदृश्यस्ता: कृष्णधेनव इति चेच्छ्रूयताम्—सायं दिवसावसाने स्वल्पवयस्का अल्पायुष्का: शोभनतमा अनिर्वचनीयसौन्दर्यजुषोऽतिशयेन प्रिया: प्रेष्ठा: प्रियतमाश्च ये आत्मवत्सा: स्वकीयास्तर्णकास्तेषां स्मृत्या स्मरणमात्रेण प्रोद्भिन्ना प्रादुर्भूता योत्कलिकोत्कण्ठा तयोच्चा उच्छ्रिता ये पुच्छा: पुच्छाग्रास्तै रुचिरा रमणीया: । सायाह्ने यदा नटवरवपुष: श्यामसुन्दरस्य गावो वनान्निवर्त्तन्ते तदा स्वप्रियाणां सुन्दरातिसुन्दराणां शिशूनां दिदृक्षया तासां हृत्स्वेकमपि क्षणक्षेपात्मकं कालमसहिष्णुरुत्कण्ठा प्रादुर्भवति । एवं विहितोच्चपुच्छाग्रभागास्ता अतीव रमणीयत्वेन परिकल्प्यन्ते कविना । अपि च, गोष्ठार्थं व्रजार्थमुत्कण्ठिता व्रजं प्रत्याविवर्त्तिषया परमौत्सुक्यं भजमाना: । अपि च, पीनानि सुपुष्टानि यान्यापीनान्यूधांसि तेषां भरेण भारेणावरुद्धा: पदे पदे स्थगिता गतयो गमनव्यापारा यासां ता: । द्रुततरं गच्छन्त्योऽपि ता ऊधस्येन हेतुनातीव स्थूलस्थूलानां स्तनानां महता भारेण स्थाने स्थाने स्खलन्ति स्म । तथापि वत्सानां स्वशिशूनामारवेण शब्देनाऽऽसमन्ताद् वेगिता वेगं गमिता: । यद्यपि पीनकुचभारवशाद् गत्यवरोधस्तथापि वत्सरवश्रावं पुनर्गतिवृद्धिरिति भाव: । हे हरे ! ईदृश्यस्तव गाव: प्रतिहुङ्कृतैर्वत्सानां हुङ्कारात्मकशब्दान् प्रति स्वकीयै: प्रतिहंभारवैर्मे शुभतती: कल्याणानां परम्परा विस्तारयन्तु, इति साञ्जलिबन्धमभ्यर्थना ।

**अयमर्थ:** । कविरत्र धेनूनां हुङ्कारान् शुश्रूषते । तेन च सर्वविधकल्याणाऽवाप्ति: परिकल्प्यते । गवामत्र पञ्चधा चित्रणम् ।

(१) तासां पुच्छा उच्चा विद्यन्ते । तत्र निमित्तं स्वप्रियवत्सदर्शनौत्सुक्यम् ।

(२) अतएव व्रजगमनोत्कण्ठा ।

(३) उत्कण्ठया द्रुतगति: । किन्तु पुष्टस्तनभारवशात्स्खलनम् ।

(४) गोष्ठेषु वत्सानां रवेण गतौ वेगसञ्चार: ।

(५) अतएव प्रतिहुङ्कृतिसम्पादनशीलत्वम् ।

**शार्दूलविक्रीडितं छन्द:** ।

( ७५ )

**वल्गत्कालियनागेति** । तस्मै नि:शेषब्रह्माण्डप्रख्यातकीर्त्तये देवाय विबुधशिरोमणये श्रीकृष्णाय नम: । कीदृशे देवायेत्याह—सन् शोभनो रङ्गो नाट्यस्थानमस्यास्तीति सद्रङ्गी तस्मै । ननु किं नाम रङ्गस्थलं श्रीकृष्णस्येति चेच्छ्रूयताम्—वल्गन्तितस्ततश्चरिष्णूनां फणावलीनां गमनागमनव्यापारेण

घूर्णनेन वा नृत्यन्निव यः कालियनागस्तन्नामको विषधरस्तस्य भीषणानां भयङ्क-राणां फणानां दर्वीणां यः स्तोमः समूहस्तेन रङ्गी। पूर्वं तपनतनयायां निवसन्तं फूत्कारगर्जन्तं सृक्किणी लेलिह्यमानं कालियदर्वीकरं दमयिष्यन्, फणिनः स्फाराणां फणानां फणातः फणामुत्प्लुत्य प्रधानफणामारुरोह श्रीकृष्णः। तत्र च भगवता श्रीकृष्णेनाभूतपूर्वं नाट्यमारम्भि। चरणयोश्चलन्तीनां चलत्कोटीनां रणितेन, कटौ कनकमेखलावलम्बितघण्टिकानां ध्वनिना, बाह्वोर्वलयकेयूररणरणायमानेन क्वणितेन, गण्डयोश्च कुण्डलयोः शब्देन नैकविधवाद्यसंगीतारम्भः प्रावर्त्ति। 'सद्रङ्गीत्यत्र' 'अत इनिठनौ' पा० ५।२।११५ इति सूत्रेणेनिः।

अपि च, गोपीनामाभीरवामभ्रुवां पीनाः पुष्टा ये कुचाः स्तनास्तैः कन्दु-कवते देवाय नमः। कन्दुकोऽस्यास्तीति कन्दुकवान् तस्मै। "तदस्यास्त्यस्मिन्निति मतुप्" पा० ५, २, ९४ इत्यनेन मतुप्, "मादुपधायाश्च मतोर्वोऽयवादिभ्यः" पा० ८, २, ९ इत्यनेन मस्य वः। एकस्मिन्समये बालमुकुन्दः समानवयोभि-र्गोपकुमारकैः सह कन्दुकक्रीडां कुर्वाण आसीत्। कन्दुके च कुत्राप्युत्पतिते क्रीडाङ्गणमुपव्रजन्तीनां व्रजवनितानां कुचावस्प्राक्षीत् यदहो त्वयोत्तरीयान्तश्छा-दितः कन्दुकः। अयमिह, दीयतां तावदिति। एवं गोपीनां कुचैः कन्दुकक्रीडा-परायण! बालमुकुन्द! नः पाहीति भावः।

अपि च, दिव्यो योऽद्रिर्गोवर्धनाख्यः पर्वतस्तेन छत्रिणे। छत्रमातपत्रमस्या-स्तीति छत्री तस्मै। पूर्वं स्वपूजाभङ्गमन्युकुपितः शतमन्युः पयोमुचां धाराभिर्व्रजं जलधीचकार, सप्तहायनो मुररिपुश्च गिरिभिदो गर्वमपजिहीर्षुर्गोवर्धनाख्यं गिरिं छत्रीचकारेति श्रीमद्भागवतीया कथा। देवैर्निर्जरैर्दासवते। दासाः सन्त्यस्येति दासवान् तस्मै। ब्रह्मेन्द्रवरुणयमप्रभृतयो देवा यस्य श्रीकृष्णस्य दासत्वमङ्गी-कुर्वन्ति, तस्मै देवाय नमः।

अपि च, अब्धिना सागरेण गृहमस्यास्तीति गृहवान् तस्मै गृहवते। यः सागरे निवसति विष्णुश्रीकृष्णस्तस्मै नमः। व्यालेनानन्ताख्येन भुजङ्गेन खट्वा शयनमस्यास्तीति खट्वावान् तस्मै खट्वावते। भुजङ्ग एव यस्य शयनं शेषशा-यित्वात्। कालेन महाकालेन धर्मराजेनास्त्रमस्यास्तीत्यस्त्रवान् तस्मै। कालो यम एव यस्यास्त्रम्। विः पक्षी तेन विना गरुडेन रथोऽस्यास्तीति रथवान् तस्मै रथवते। गरुड एव यस्य रथस्तस्मै श्रीकृष्णरूपाय देवाय नमः।

अत्र कन्दुकवते, दासवते, गृहवते, खट्वावते, अस्त्रवते, रथवते चेति षट् प्रयोगा मतुबन्ताः। रङ्गिणे, छत्रिणे चेति द्वौ प्रयोगाविनिप्रत्ययान्तौ बोध्यौ।

**अयम्भावः**। कस्मैचिदलौकिकाय देवाय नमः। यस्य रङ्गस्थली कालिय-नागस्य फणसमूहः। यस्य क्रीडाकन्दुकाः गोपीनां कुचाः। छत्रं कोऽपि पर्वतः।

सेवका वृन्दारकाः। वसितमर्णोनिधिः। शयनं महीयान् भुजङ्गः। अस्त्रं यमः। रथश्च पक्षी। न चाश्रुतपूर्व एवैतादृशो देव इति वाच्यम्, श्रीकृष्णेऽष्टानां लक्षणानां विद्यमानत्वात्।

**भ्रान्तिमदलङ्कारः**। एकस्य श्रीकृष्णस्य वस्तुनोऽष्टधोल्लेखादुल्लेखस्य च वास्तविकत्वादुल्लेखालङ्कारः। कालियनागस्य भीषणफणाया रङ्गस्थलरूपत्वेन, कुचानां कन्दुकत्वेन, अद्रिणश्छत्रत्वेन, देवानां दासत्वेन, अब्धेर्गृहत्वेन, व्यालस्य खट्वात्वेन, कालस्यास्त्रत्वेन, गरुडस्य च रथत्वेन कथनात्**परिणामालङ्कारः**। मियो निरपेक्षतया **संसृष्टिरलङ्कारः**।

**शार्दूलविक्रीडितं छन्दः**।

( ७६ )

**मध्याह्ने द्रुममूलेति**। हरेः श्रीकृष्णस्य ते तत्तादृशा अपाङ्गाः कटाक्षा नः पान्त्वस्मान् रक्षन्तु। मध्याह्ने द्रुममूले कदम्बमूले यो विश्रमो विश्रान्तिस्तस्मिन् रतः संलग्नो यः श्रीकृष्णो बालमुकुन्दस्तस्य पादयोश्चरणयोरानते प्रणमति तस्मिन्।

अथ च, विहरणे विहारक्रीडायां प्रत्यूहं विघ्नमातन्वति विस्तारितवति। तदा देवेभ्यः कुप्यन्तः प्रकुपिता ये बालकाः श्रीकृष्णसहचरा गोपदारकास्तेषां यो यष्टिघातो गोपबालकर्तृको दण्डप्रहारस्तेन निपतन् स्खलन् यो भूषोच्चयोऽलङ्कारराशिर्यस्य सुरव्रजस्य तस्मिन्।

यद्वा, भूषाशब्दोऽलङ्कारवाचकः। उच्चयशब्दश्च परिधानग्रन्थिपरः। एवं क्रोधं गतानां सखीनां दण्डाघातैर्देवानां त्रुटिता अलङ्काराः कदाचित्स्खलिताः, कदाचिच्च परिधानग्रन्थयो विगलिता इत्यर्थः। अत एवायं वृन्दारकनिकरो विशेषेण क्षत आसीदित्याह 'विक्षते'।

अस्यां स्थितौ श्रीकृष्णस्य कटाक्षाणां कविना त्रिधोपस्थापनं कृतम्। तद्यथा—साश्चर्या आश्चर्येण सह वर्त्तमाना इति। ननु किन्निमित्तमेतदाश्चर्यमित्याह—एते खलु सखायः सर्वथाऽज्ञातदेवमाहात्म्योत्कर्षा महेन्द्रप्रभृतीनप्यपरिचिन्वन्तस्तांश्च यष्टिभिर्घातयन्तस्तेषामलङ्कारादीन् संत्रोटयन्तीति साश्चर्याः कृष्णकटाक्षाः। तिरस्क्रियया सह वर्त्तन्त इति सतिरस्क्रियाः। अपरत्रेमेऽज्ञानिनो ब्रह्मादिदेवानप्यवधीरयन्तीत्यहो मौढ्यमेतेषामिति विचार्य तिरस्कारसहिताः कटाक्षाः। अपि च, करुणया सहिताः सकरुणाः। तथापि भगवान् चिन्तयति यन्ममैवैते प्रियाः सखायः। ननु क्षम्यमेतेषामागोऽज्ञानमूलत्वादिति करुणाभावः कटाक्षेषु। यद्वा, करुणायोग्याः खल्वेते देवा येषामीदृशी स्थितिर्मत्सहचरसमक्षे।

**अयम्भावः** । तृणचरानुगः श्रीकृष्णो यदा वृन्दावने गाश्चारयतिस्म, तदा गोचारणात्परिक्लान्तकायो मध्याह्नवेलायां कस्यचित्कदम्बतरोरधस्तात्सघनच्छायायां क्षमापाचिकीर्षया तिष्ठतिस्म । अस्मिन् समये ब्रह्मेन्द्रादयो देवा अहमहमिकया प्रणिनंसव उपतिष्ठन्तेस्म । अनेन देवनतिव्यापारेण क्रीडायां महान् विघ्नः समजनि । क्रीडाभङ्गेन हेतुना खिद्यमानाः कुप्यन्तश्च गोपकुमारकाः स्वकीयाभिर्यष्टिभिरतान् दूरीचिकीर्षवस्ताडितुं प्रवधृतिरे । एतेन कदाचिद् देवानां संत्रुटितान्याभूषणानीतस्ततो क्षतविक्षतानि सन्ति विकीर्णान्यासन् । सस्मितमेतदवलोकयतः श्रीकृष्णस्य नयनयोः क्वचित्कौतुकं क्वचिदवहेलनं क्वचित्कारुण्यं प्रादुरासीदित्येतादृशाः श्रीकृष्णलोचनप्रान्ता नः पान्तु ।

अस्माकमपि कदाचिदज्ञानाद्देवहेलनं कदाचिदालस्याद्धर्माचरणेऽप्रवृत्तिः कदाचिन्मौढ्याच्छास्त्रविधिमर्यादोल्लङ्घनमिति सर्वं दोषजातं कृपया मर्षयन्तः कारुण्यपूर्णाः कृष्णकटाक्षास्तत्पादपद्मभक्तिसौरभभरान्नः पान्त्विति ध्वनिः । व्यतिरेकालङ्कारेण करुणरसध्वनिः ।

**व्यतिरेकालङ्कारः** । ब्रह्मेन्द्रादिदेवेभ्यो गोपबालकानामुत्कर्षप्रतिपादनात् ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७७ )

**कर्णाभ्यर्णेति** । सा सुप्रसिद्धा स्थास्नुः स्थिरा चासौ रासस्थलीति स्थास्नुरासस्थली सुदृढं रासमण्डलं नोऽस्माकं कृते शुभं कल्याणं दिशतु विदधातु । √दिशधातोरतिसर्जनार्थकत्वेऽपि काव्यप्रयोगात्प्रकृते सङ्गतिर्बोध्या । यथाहि—

> "प्रकृतिसुभगगात्रं प्रीतिपात्रं रमायाः ।
> दिशतु किमपि धाम श्यामलं मङ्गलं वः ।।"

लोलम्बराजविरचितवैद्यजीवनम्, १ । 'स्थास्नु' रित्यत्र 'ग्लाजिस्थश्च ग्स्नुः' पा० ३, २, १३९ इति ग्स्नुः प्रत्ययो बोध्यः ।

तत्र रासस्थलीं विशिंषन्नाह—कर्णयोरभ्यर्णे प्रान्तभागे विकीर्णयोर्विस्तृतयोर्लोचनयोर्या रुचिः कान्तिस्तया प्रोद्भिन्नं समुल्लसद्विकसितं वा यत्तारुण्यं यौवनं तद् बिभर्त्तीति तारुण्यभृद् या राधा तत्सहिता या गोपवध्वो व्रजसुन्दर्यस्तासां यः स्मराहवः कामसङ्गरस्तस्य या कला विभ्रमस्तस्या व्यापाराय रङ्गस्थली । स्थास्नौ रासस्थल्यामाकर्णान्तविकीर्णलोचनरुचः श्रीराधिकाया आभीरवामभ्रुवाञ्च मन्मथप्रयुक्तलास्यव्यापाराः प्रवर्त्तन्त इत्यर्थः ।

अपि च, लोकानां चतुर्दशभुवनानां या अशेषाः कला ललितकलास्तासां

गुरुः प्रवर्त्तक आचार्यः श्रीकृष्णस्तस्य । अत्यतिमात्रं लसत्प्रचकासद् यल्लास्यं कोमलनृत्यं तेन प्रकर्षेण वल्गंश्च नृत्यंश्च यः पदन्यासश्चरणविक्षेपस्तस्य श्रिया शोभया सुभगा मनोहारिणी । इयं रासस्थली निर्नतिषोः श्रीकृष्णस्य सकल-भुवनसौन्दर्यातिशायिपरमसुषमाऽऽधायकैश्चरणविन्यासैर्जयतीति दिक् ।

**अयमाशयः** । कविरत्र सर्वात्मना स्वश्रेयसे रासस्थलीं प्रार्थयते । यत्र तरुणिमोद्गममोदमाना श्रीप्रिया लावण्यगण्याभिश्चन्द्राननाभिः सहचरीभिरनङ्ग-सङ्गरव्यापारानातन्वती राजते । यत्र च, सकलकलाकलापकुशलस्य केशवस्य कोमलतमेन नृत्येन नृत्यन्तश्चरणारविन्दविन्यासा मनो रमयन्ति । एवं श्रीराधि-कायास्तत्सहचरीणां श्रीकृष्णस्य च नृत्यपरायणत्वात्तेन च परमानन्दाम्भोधिनि-मज्जितत्वादुपसृतानां सद्यः कामपूरकत्वमिति ध्वनिः । यथा विद्यावत्सु विद्या-दानशक्तिर्धनवत्सु धनदानशक्तिस्तथैवानन्दमग्नेभ्य एव सार्वत्रिक आनन्दप्रसारः।

पद्येऽस्मिन् पूर्वार्धे द्वयोश्चरणयोरेकेन प्रदीर्घेणापि समासेन वैदर्भी रीती राजते, समासस्य कोमलकान्तपदविन्यासभूयिष्ठत्वात्, रसस्य च कोमलत्वात् । गुणरीतयो हि रसाधीनाः। रूपकालङ्कारः । रासस्थल्यां रङ्गस्थलीत्वारोपणात् ।

**शार्दूलविक्रीडितं छन्दः** ।

( ७८ )

**दृष्ट्वा त्रैपथगमिति** । हे श्याम नयनाभिराम श्यामसुन्दर । श्यामलि-मानं दधतीयं भास्वत्सुता मिहिरतनया कालिन्दी राजते सर्वोत्कर्षेण वर्त्तते । इयं कालिन्दीर्ष्या च रोषश्चेर्ष्यारोषौ तयोर्वशान्निखिलान्यङ्गानि स्वीयान-शेषानवयवानपास्य दूरीकृत्य तव श्रीकृष्णस्य सर्वं श्यामलिमानं श्यामवर्णं दधती धारयन्ती सती । ईर्ष्या हि नाम परोत्कर्षासहमानं तेजः । स्त्रियाः पत्युरन्य-प्रियासङ्गदर्शनस्पर्शनादिजनितो मानविशेषः । प्रस्तुत ईर्ष्याकोपाग्निदग्धहृद-यायाः कलिन्दनन्दिन्या रमणीत्वेनोपस्थापनम् ।

ईर्ष्यायां निमित्तद्वयमाह—तव पादपद्माभ्यां चरणारविन्दाभ्यामुदितं निःसृतमतुलमपरिमितं त्रैपथगं गाङ्गं प्रवाहं दृष्ट्वा निरीक्ष्येति प्रथमं निमि-त्तम् । त्रिपथे स्वर्गमर्त्यपातालमार्गे गच्छतीति त्रिपथगा ।

> **"गङ्गा त्रिपथगा नाम दिव्या भागीरथीति च ।**
> **त्रीन् पथो भावयन्तीति तस्मात् त्रिपथगा स्मृता ॥"**
>
> रामायणम्, १, ४३, ६

त्रिपथगाया अयं त्रैपथगो गाङ्गः प्रवाहः । प्रस्तुते कविकल्पनायां त्रिपथ-गानाम्न्यैका रमण्यासीत् । इयं विष्णुपदी सततं श्रीकृष्णपादपद्मानुध्यानरता तच्च-

रणाश्रिता स्वकीयं सर्वातिशायि सौभाग्यं प्रख्यापयति। गङ्गायाः प्रादुर्भावो विष्णुकृष्णस्य पादाङ्गुष्ठनखादिति तु पुराणप्रसिद्धम्।
यथाहि,

**"वामपादाम्बुजाङ्गुष्ठनखस्रोतविनिर्गताम् ।**
**विष्णोर्बिभर्त्ति यां भक्त्या शिरसाहर्निशं ध्रुवः॥**

विष्णुपुराणम्, २, ८।

अपि च, तव वक्त्राम्बुरुहाद्वदनसरसिजादुदितं प्रादुर्भूतं शतमुखं शतधा प्रवहन्तमपरं सारस्वतं प्रवाहं निरीक्ष्य। सरस्वत्या अयं सारस्वतस्तम्। सरस्वती नाम्नी श्रीकृष्णस्य समीपे द्वितीया रमण्यासीत्। सा सर्वदा श्रीकृष्णस्य वदनारविन्दं श्रितवती। यतः खलु श्रीकृष्णस्य मुखान्निरर्गलं धाराप्रवाहेण सरस्वत्याः सुमधुरा वाग्विन्यासाः स्यन्दन्ते।

अनेन कलिन्दनन्दिनी चिन्तयामास यदहो सानुरागः प्रसन्नः प्रियतमः श्रीकृष्ण एकां प्रियतमां गङ्गां चरणयोराश्रयं निर्दिदेश, अपरां प्रियतमां वागीश्वरीं सरस्वतीं वदनारविन्द आश्रयं निरदिक्षत्। किं मया हतभागिन्याऽधुनाऽऽश्रयणीयमिति विमनायमाना क्रुद्धा च यमुना श्यामस्य सौन्दर्यं नूनं श्यामलिम्नीति भावेन स्वकीयेषु सर्वेष्वप्यङ्गेषु सर्वं श्यामलिमानं लिप्तवती राजते।

**अयम्भावः**—अत्र कविर्मनुते यत्पूर्वं यमुनाऽपि चन्द्रकिरणधवलाऽऽसीत्। एकदा घनश्यामस्य वपुषः सर्वं श्यामलिमानं बलादाच्छिद्य स्वाङ्गेषु लिप्तवतीति तमालश्यामाऽवलोक्यते। नैसर्गिकोऽयं स्वभावः सर्वासां स्त्रीणां यत्कापि प्रियतमस्य काञ्चिदपरां प्रियां न सहते। एकाधिकारेणैव सर्वदा स्वकीयं नायकं चिकमिषते। अत्र यमुनाया गङ्गासरस्वतीरूपेण सपत्नीद्वयमुपस्थापितम्। एतेन चेर्ष्यया सर्वथा क्रोधवशीभूता किंकर्त्तव्यविमूढतां गता स्वात्मानं श्यामामकार्षीत्। श्यामा नायिका साहित्यशास्त्रे नायिकासु प्राधान्यं भजते। नितान्तं हृदयावर्जनीयेयं कल्पना।

**तद्गुणालङ्कारः**। निसर्गतो यमुना चन्द्रधवलाऽऽसीत्। श्यामस्य श्यामत्वग्रहणादेव तस्याः श्यामत्वं समजनीति स्वं रूपं परित्यज्यान्यदीयरूपपरिग्रहणात्तद्गुणालङ्कारः। रूपकालङ्कारश्च। गङ्गायां सरस्वत्यां यमुनायाञ्च नायिकात्वारोपात्। मिथो निरपेक्षतया संसृष्टिरलङ्कारः।

**शार्दूलविक्रीडितं छन्दः।**

( ७६ )

**जगत्त्रयभुवामिति।** हे हरे! जगतां त्रयं जगत्त्रयं त्रिलोकी तत्र भवन्तीति

जगत्त्रयभुवस्तेषां त्रिभुवनदेहधारिणां नृणां मनुष्याणामपारोऽनन्तश्चासौ मोह इत्यपारमोहस्तमविद्यापरपर्यायमपरिमितं मोहमपोहितुं निराकर्त्तुं त्वया श्रीकृष्णेनैतद्विख्यातमसिता श्यामा प्रभा कान्तिर्यस्य तदसितप्रभं सजलजलदनीलं प्रथितं प्रख्यातञ्च यद्रूपं सकलशास्त्रपरिगीतं गृहीतमङ्गीकृतमासीत्।

मोहो हि नामाविद्या, देहादिष्वात्मबुद्धिरित्यर्थः। मोहस्वरूपञ्च यथोक्तम्—

**"मम माता मम पिता ममेयं गृहिणी गृहम्।**
**एतदन्यन्ममत्वं यत्स मोह इति कीर्त्तितः॥"**

√मुह वैचित्र्य इत्यस्माद्धातोर्भावे घञि कृते सत्यज्ञानमात्रार्थस्य मोहशब्दस्य निष्पत्तिः।

यद्वा, धर्मविमुखत्वं मोहः।

यद्वा, सत्यामपि धर्माचरणचर्याप्रवृत्तावकर्त्तव्ये रागात् कर्त्तव्यताभ्रमो मोहः।

यद्वा, मोहशब्दो मोहन्धकारवाचको वेदान्तादिशास्त्रेषु तथा संवर्णितत्वात्।

एवमविद्याया अकर्त्तव्यताबुद्धेश्चान्धकारत्वेनेवोपचारः। अन्धकारस्य च निबिडतमश्यामवर्णकत्वाच्छ्रीकृष्णेन निःशेषः श्यामलिमा स्वकीये स्वरूपे गृहीतः। येन त्रिलोक्यां कोऽपि जनो निर्धनः सधनो वा, निर्बलः सबलो वा, निरक्षरः साक्षरो वा, अभक्तो भक्तो वा न मुह्येत्। यदा त्रिभुवनस्याशेषमोहान्धकारोपचयो मया कृष्णेनाङ्गीकृतस्तदा कथङ्कारं जना मोहं गच्छेयुरिति धिया।

यद्वा, न कोऽपि मयि मुह्येदिति धिया। यतः खलु श्यामाय न कस्यापि समावर्जनं भवति। तथापि हन्त! आश्चर्यं यत्त्वमपारसुषमाया अनन्तसौन्दर्यविच्छित्तेश्छटाया अब्धिना सागरेणामुनैव श्यामलेन रूपेण भुवनसुन्दरीणां चतुर्दशभुवनभामिनीनां मानसे हृदि बलाद्धठान्मोहं रागं प्रवर्धयसि।

**अयम्भावः**। कृष्णस्य कृष्णवर्णं वर्णयन् कविः कथयति। पुरा मोहग्रस्तानां त्रिभुवनप्राणिनां मोहापजिहीर्षया कृष्णः समग्रं कृष्णं मोहराशिं स्वांगेपूररीचकार। किन्तु तस्मिन्नपि रूपे सौन्दर्यसागरः समुद्वेलितोऽभूत्। यत्र च सर्वाः सुभ्रुवः कुरङ्गनयना रमण्यो मुह्यन्ति।

**विषमालङ्कारः**। कर्त्तुः क्रियाफलस्यानवाप्तित्वादनर्थकत्वाच्च। कृष्णस्यान्तःकरणे मोहापहरणात्मकोऽभिलाषो जजागार। स च साफल्यं न लेभे। किन्तु कृष्णस्य कृष्णरूपदर्शे सर्वासां वामभ्रुवामपारो मोहः प्रादुर्भूत इति विरुद्धफल-

प्राप्तिसंवर्णनाद्विषमालङ्कारः । यथाहि काव्यप्रकाशे—'···कर्तुः क्रियाफलावाप्ति-र्नैवानर्थश्च यद्भवेत् ।···एष विषमो मतः' (१०।१२६) ।

**रूपकालङ्कारश्च** । श्रीकृष्णस्य रूपेऽब्धेः समारोपणात् । द्वयोर्मिथो निर-पेक्षतया संसृष्टिरलङ्कारः ।

**पृथ्वी छन्दः** ।

( ८० )

**शुद्धं सत्त्वगुणेति** । हे भगवन् ! हे नन्दनन्दन श्रीकृष्ण ! ते तव गात्रं कलेवरं प्रकृत्यैव स्वभावेनैव शुद्धं निर्मलम्, सत्त्वगुणस्यैकं धाम निधानम्, शुक्लं धवलवर्णकमित्यर्थः । ननु शुक्ले सति श्रीकृष्णरूपे पुराणादिशास्त्रेषु नवजलधर-श्यामरूपत्वेन चित्रणमसङ्गतमिति चेदाह—किन्तु कृपाया अनुकम्पाया यदम्बु जलं तेन पूरितं कृपाम्बुपूरितमिदं गात्रं सदा सर्वदा श्यामं श्यामवर्णमयं भासते प्रतिभाति । कृपारूपं यज्जलं तत्पूरितमिति भावः ।

सांख्यशास्त्रे सत्त्वरजस्तमांसीति त्रयः प्रकृतेर्गुणा निरूपिताः सन्ति । तल्ल-क्षणञ्च यथोक्तम्—

**"सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।**
**गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ।।"**

सांख्यकारिका, १३ ।

वाचस्पतिमिश्रेण च सांख्यतत्त्वकौमुद्या मङ्गलाचरणे सत्त्वगुणस्य श्वेत-वर्णः प्रतिपादितः । यथाहि—

**"अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां नमामः ।**
**अजा ये तां जुषमाणां भजन्ते जहत्येनां भुक्तभोगां नुमस्तान् ।।"**

प्रकृत्येत्यत्र "प्रकृत्यादिभ्य उपसंख्यानम्" (वा- २।३।१८) इति तृतीया ।

को हि नाम न जानाति सांख्यसिद्धान्तवित् त्रयाणां गुणानां सत्त्वस्य मूर्धन्यताम् । एतादृशेन सत्त्वेन सम्भृतं श्रीकृष्णगात्रं चकास्तीति सिद्धान्तपक्षः कविधिया । तदेव दृष्टान्तेन समर्थ्यते ।

हि यतो निखिलाः समस्ता मेघा वारिवाहा निसर्गतः स्वभावतः सितिम्ना धवलिम्ना युक्ताः सन्ति । परं तेष्वेव मेघेषूदकसम्भृतेषु जलपूर्णेषु सत्सु सततं निरन्तरं श्यामत्वं कृष्णत्वमेवेक्ष्यते दृश्यते ।

**अयम्भावः** । वस्तुतः श्रीकृष्णस्य विग्रहवपुर्निसर्गत एव सुधाकरकरनिकर-धवलमास्ते, तस्यातीवनिर्मलत्वात् सत्त्वगुणरूपत्वाच्च । श्यामवर्णमयी प्रतीति-

रतु केवलं करुणानीरसम्भृतत्वादेव संजायते। यथाहि मेघा निसर्गतः शुक्ला भवन्ति, तेषु कृष्णवर्णमयी प्रतीतिस्तु जलपूर्णेष्वेव सम्पद्यते।

**दृष्टान्तालङ्कारः। उत्प्रेक्षालङ्कारश्च।**

**शार्दूलविक्रीडितं छन्दः।**

( ८१ )

**लावण्याद्भुतेति**। हे श्रीकृष्ण। क्षीराम्भोनिधिः क्षीरसागरस्तस्य यद्गाढं मन्थनं मन्दराचलेन देवदानवैः क्रियमाणो मन्थनव्यापारस्तस्माद्भवतीति क्षीराम्भोनिधिगाढमन्थनभूर्लक्ष्मीस्तस्या अपेक्षया लावण्यस्य सौन्दर्यस्य योऽद्भुतो विलक्षणो दुग्धसागरस्तस्माद्भवतीति तस्यां लावण्यलक्ष्म्यां तव विशेषः प्रेमाऽनुरागविशेषः समुज्जृम्भत इत्यस्माभिरुन्नीयते वितर्क्यते। समुद्रमन्थननिर्गतायाः स्वकान्त्या दिशो रञ्जयन्त्या भगवत्परायाः श्रीरमास्वरूपिण्या लक्ष्म्या अपेक्षया लावण्यदुग्धसागरनिर्गतायां सौन्दर्यलक्ष्म्यां श्रीकृष्णस्याधिकतरः प्रेमेति भावः। कुत इति चेदाह—यतस्तां लक्ष्मीं लावण्यदुग्धसागरसम्भूतां निरनुरागामपि यत्नतो निखिलेष्वङ्गेषु सर्वेष्वप्यवयवेष्वलं दधासि धारयसि। स्वत एवालिङ्गितुं प्रवर्त्तसे। इमां परां दुग्धसागरोद्भूतामपरां सुप्रसिद्धां क्षीरोदतनयां तु गाढानुरक्तां सानुरागामपि पुनर्वक्षस्येव दधासीत्याश्चर्यम्। अनेन भगवदनुकम्पा तु केवलं तदनुकम्पासापेक्षा, न त्वनुरागादिसाधनान्तरसापेक्षेति ध्वनिः।

**अयम्भावः**। अत्र कविरुत्प्रेक्षते यदेकतो द्वौ क्षीरसागरौ स्तः। अपरतो द्वे लक्ष्म्यौ स्तः। एका लावण्यसागरोद्भूता सौन्दर्यलक्ष्मीः। अपरा च पुराणप्रथिता दुग्धसागरोद्भूता लक्ष्मीः। इमे द्वे लक्ष्म्यौ श्रीकृष्णः स्वकीये विग्रहे दधाति। सुरासुरैर्मथ्यमानाद्दुग्धमहार्णवादुत्पन्नायां लक्ष्म्यां तु भगवतः सामान्यानुरागः। अतएव तां वक्षःस्थल एव श्रयति। अपरस्यां लावण्यदुग्धमहार्णवोद्भूतायां लक्ष्म्यां भगवतो विशिष्टानुरागः समुन्मिषति। येन स्वीयैः समस्तैरवयवैस्तामाश्लिष्यति।

**अनुमानालङ्कारः**। भगवान् सौन्दर्यलक्ष्म्यामधिकतरं स्निह्यतीत्यस्यास्मदनुमानविषयत्वात्। लक्ष्म्योरन्यतरस्यामधिकतरप्रेमकारणं कविनाऽनुमीयते इति हेतुनाऽनुमानालङ्कारः।

**शार्दूलविक्रीडितं छन्दः।**

( ८२ )

**वीतव्याततेति**। हे श्रीकृष्ण! वस्त्राणां शाटिकादीनां याऽऽकृष्टिर्बलादाकर्षणं तया दुर्योधनराजसभायां दुःशासनकर्तृकेनाऽऽकर्षणेनातिविह्वला व्याकुली-

कृतमानसा या द्रुपदजा द्रौपदी तस्याः कष्टमपहर्त्तुमिच्छतीति कष्टापहारैषी तस्य तादृशस्य तव कृष्णस्य सा महाभारतपुराणादिशास्त्रप्रथिता सद्यस्तत्कालमेवानन्त-पटस्य प्रणीतिपटुता निर्माणचातुरी नस्त्वच्छरणाश्रितान् पातु रक्षतु। अस्या अनन्तपटप्रणीतिपटुतायास्त्रिविधं वैशिष्टयमास्ते।

वीता अन्योन्यं निबिडप्रोता गाढमनुस्यूताः (वीता इति √वेञ् तन्तु-सन्ताने इत्यस्य धातोर्निष्ठायां रूपं बोध्यम्), व्यातता विस्तरयुक्तास्तन्तवः सूत्राणि तेषां या भङ्गघटना संत्रोटविषयिणी रचना तस्याः संश्लेषस्य पुनर्मेल-नस्य विश्लेषणं वियोगो यत्र। लोके सामान्यरूपेण तन्तुवायकर्त्तृके पटनिर्माण-विषयके कर्मणि मध्ये मध्ये कदाचित्तन्तवः संत्रुट्यन्ति, कदाचित्तन्तूनां संश्लेषः संपद्यते, कदाचित् कस्यापि विपरीतस्य तन्तोर्भङ्गः कर्त्तव्यकोटिमावहति, तस्य स्थाने कस्याप्यपरस्यानुकूलस्य तन्तोः संश्लेषणं विधीयते। एतादृशी घटनैव संश्लेषणरूपेणाङ्गीक्रियते। श्रीकृष्णकर्त्तृके वस्त्रनिर्माणविषयके कर्मणि तु भङ्ग-तन्तुसंयोगात्मकव्यापारस्य सर्वथाऽत्यन्ताभाव इति विशेषः।

अपि च, वेम्नो या व्यापृतिर्व्यापारस्तद्वर्जं तद्रहितमिति। लोके तु तन्तु-वायो वस्त्रनिर्मितये वेम्नो व्यापारान् समाश्रयति, किन्तु हे श्रीकृष्ण! त्वया तु स्वीयायामलौकिक्यां पटनिर्मितिपटुतायां नाश्रीयते वेम्नो व्यापार इति हन्त महदाश्चर्यम्।

अथ च, उज्झिता परित्यक्ता तुर्याः सञ्चालनप्रक्रिया यस्यां क्रियायां यथा स्यात्तथा। लोके तु तुरीप्रयोगमन्तरा न खलु कथञ्चिदपि पटप्रणीतिः। तव पटप्रणीतौ तुर्या अप्यभाव इत्यलौकित्वम्।

**अयम्भावः।** हे श्रीकृष्ण! त्वयि काचिल्लोकविलक्षणा पटप्रणीतिपटुता सन्निधत्ते। सामान्यरूपेण जगति वस्त्रनिर्माणं कारणत्रयसापेक्षम्। यथाहि—(१) वेम्नो व्यापारः, (२) तुरीसञ्चालनम्, (३) दीर्घप्रदीर्घतन्तुषु कदाचित् खण्डितेषु सत्सु तत्स्थाने तन्त्वन्तरसंयोजनम्। श्रीकृष्णकर्त्तृकवस्त्रनिर्माणव्यापार-स्तु सर्वथा पूर्वोक्तकारणत्रयनिरपेक्ष इति सत्यं विस्मितं चेतः। श्लोकेऽस्मिन् भगवतोऽशरणशरणत्वं दुःखहारकत्वञ्च ध्वन्यते।

**विभावनालङ्कारः।** तन्तूनां संश्लेषविश्लेषरूपं कारणम्, श्रीकृष्णकर्त्तृक-वस्त्रनिर्माणरूपं कार्यम्, इति संश्लेषविश्लेषरूपकारणभावेऽपि वस्त्रनिर्माणरूप-कार्यदर्शनाद् विभावनालङ्कारः।

**शार्दूलविक्रीडितं छन्दः।**

( ८३ )

**दिव्यास्ता इति ।** ताः सर्वोत्कर्षेण वर्त्तमाना दिवि भवा दिव्या नाकनिवासिन्यो निजमाधुर्या स्वकीयेन दुग्धमधुरिम्णा जितः सुधास्वादः पीयूषरसनिष्यन्दो येन तत्तादृशं रसं दुग्धं दुहाना गावः कामधेनवः सन्तु भवन्तु । सर्वप्रथमं तु वयं कामधेनूश्चिकमिषामहे। ततश्च, श्रुतिस्मृतिविधौ वेदवेदाङ्गाध्ययनविधौ रतिरनुरागो विलसतु। तत्रास्माकं विशेषो रागः समुन्मिषतु। शास्त्ररहस्येषु कृतभूरिपरिश्रमाः सम्प्रति निगमागमसिद्धान्तनिश्चायकरत्नान्वेषणैकमतयो बुभूषामः । अपि च, धान्यादिकञ्चापि धनधान्यं सर्वविधसांसारिकमैश्वर्यजातमलं पर्याप्तमस्तु । अन्ततः कामयामहे यदिह संसारे तत्सुप्रसिद्धं गौरनीलं महस्तेजः कलयतो ध्यायतो मे जनुर्लक्षाणि जन्मनां लक्षाणि भवन्तु । गौरं महो नवनीतमसृणा मृणालधवला भगवती श्रीराधा । नीलं महश्च घनश्यामः श्यामसुन्दरः श्रीकृष्णः । राधाकृष्णपादपद्मचिन्तनपरायणस्य मम लक्षाणि-लक्षाणि जन्मानि भवन्त्वित्येतदेव भगवन्तं प्रार्थये । एतन्महः परमानन्दोद्गमस्थानमिवोत्प्रेक्षितं कविना । यथाहि, अलौकिक्या माधुर्या रसेन निष्यन्देन भरः परिपूर्णो य उन्मीलन् विसर्पन् प्रमोदः परमानन्दो यस्मात्तदिति । गौरनीले महसि परिचिन्तिते सत्यलौकिकेन मधुरतमेन रसनिष्यन्देन परिपूर्णाः परमानन्दस्य कल्लोलाः समन्तात्प्रसर्पन्ति । एवं वयं केवलं राधाकृष्णविषयकचिन्तनैकानन्दरसनिष्यन्दतरङ्गिणीवीचीष्वेव सिष्णासामः ।

**अयम्भावः ।** कविरत्र दुहानाः कामधेनूः, शास्त्रेषु रतिमनन्यां सर्वविधैश्वर्योपलब्धिपूर्वकं राधाकृष्णचरणरजश्चिन्तनमेव जन्मजन्मान्तरेषु कामयमानो विरमति ।

**शार्दूलविक्रीडितं छन्दः ।**

**इति पूज्यपादपण्डितश्रीरामप्रतापशास्त्रिमहोदयानां पुत्रेण**
**जोशीत्युपाह्वेन डाक्टररसिकविहारिशास्त्रिणा**
**विरचिता कल्पलताया रसिकबोधिनी**
**व्याख्या समाप्ता ।**

# परिशिष्टम्

श्रीमद्रसिकविहारिणमभिनन्द्याशीर्भिरायुषो वृद्धयै ।
दर्भाग्रबुद्धिविद्यासिद्धयै चाद्योपदिश्यते किञ्चित् ॥१॥
प्रतिदिनमधिकाधिकमिह चेतोवृत्तिं सुवृत्तसम्पत्त्यै ।
वत्स प्रवर्तयस्वात्मानं पावय कुलञ्चास्मान् ॥२॥
वृत्तं धर्मनिबन्धनमुक्तं सर्वेषु कर्मसु प्रथमञ्च् ।
प्रतिपद्यस्व तदेतत् पुंसामेतद्धितं परमम् ॥३॥
स्मर तैत्तिरीयशाखाप्रोक्तं शिष्यानुशासनं गुरुभिः ।
दिव्यं श्रेयस्करमनुशासनमेतद्विजानीहि ॥४॥
सत्यं वद धर्मञ्चर मा स्वाध्यायात् कदापि वा प्रमदः ।
परिचर गुरुमनुचर इव कुरु चाजर्यञ्च सङ्गतं तेन ॥५॥
धर्मे सत्ये कुशलाचरणादिषु न प्रमादमनुतिष्ठ ।
सम्पद्यतेऽनवद्या सुखसम्पत्तिस्ततः स्थास्नुः ॥६॥
मनुरपि धर्माचरणस्यैव सुखाप्तौ निदानतामाह ।
तदभावादेवापदमधुना मर्त्याः समश्नुवते ॥७॥
तन्मा जहीहि वत्सालस्यात् साध्यं कदापि, कर्मैतत् ।
साध्यमनायासेनाऽऽसन्नैस्त्रिंशैः पलैरेव ॥८॥
सत्यमपि त्व पालय मा लयमापादय प्रतिज्ञातम् ।
ऋतमपि वाक्यं मिथ्यावक्तुर्मनुते जनो ह्यनृतम् ॥९॥
चित्रपटेक्षणनिद्रालस्योपन्यासवाचनादीनि ।
वृथाप्रजल्पनपठनोपेक्षाहठवादितादीनि ॥१०॥
एतान्याधुनिकानां छात्राणां दूषणानि मुख्यानि ।
तत्प्रयतस्वायुष्मन् दूरे स्थातुं त्वमेतेभ्यः ॥१०॥
अद्य तु सोपानत्का अप्यत्राभ्यवहरन्त्युदरपूरम् ।
तन्वन्तीव च होमं धूमस्तोमैः सफूत्कारम् ॥१२॥
विद्याः शास्त्रश्रद्धा धर्मोऽभ्युदयादिसाधकोऽस्माकम् ।
ग्रीष्मापगाविलायं सर्वेप्येते विलीयन्ते ॥१३॥

सर्वोत्कृष्टा सम्पच्छुष्यति सा चोर्ध्वशोषं नः ।
पिषन्ति चूर्णपेषं धर्म्यान् सर्वान् विधीन् मनुजाः ॥१४॥
छागीगलस्तनन्तकि कण्ठे बद्धाश्च पट्टिकास्तेषाम् ।
योषित्सीमन्तन्तक्यलिकेषूदञ्चिताः केशाः ॥१५॥
नित्यं क्षुरप्रयोगान्निर्लोमान्याननानि चैतेषाम् ।
रम्याङ्गनाननन्तकि वासितचूर्णप्रमृष्टानि ॥१६॥
सम्प्रति कषायपत्रक्वाथक्षाराम्बुपानकाः सर्वे ।
पाश्चात्यन्तक्यधुनाप्येते तद्वेषभूषाभिः ॥१७॥
त्यक्त्वा देशं कृष्णाङ्ग्लानामेषां कृते तृणत्याजम् ।
मन्ये गौराङ्ग्लैर्निजदेशेऽप्रक्रान्तमित्येव ॥१८॥
समूलकाषञ्चास्मत्संस्कृतिमेते कषन्त्यतत्त्वज्ञाः ।
घ्नन्ति च समूलघातं हिन्दूजातिञ्च भाषाञ्च ॥१९॥
अवजानन्ति तृणावज्ञायं धर्मानुयायिनः पुरुषान् ।
अद्यैते, तद्वत्सास्माकन्त्वेतेन खिद्यते चेतः ॥२०॥
अद्यैषा खलु तावन्नृणां वार्ता तु दूरतस्तिष्ठेत् ।
योषा अप्यधुनैता नूनप्यत्रातिशेरते नूनम् ॥२१॥
एताः कुलाङ्गना अपि नूतनशिक्षासु दीक्षिता भूत्वा ।
पतिसेवागृहकार्यैर्हीनिं मानस्य मन्यन्ते ॥२२॥
बिभ्रति युवजनहृदयाकर्षकसूक्ष्मांशुकानि सर्वाणि ।
कुङ्कुमपङ्ककलङ्कैनैंता भालानि लिम्पन्ति ॥२३॥
दीव्यत्करारविन्दा द्वित्रैर्वलयैश्च काचीयैः ।
कङ्कतिकया विपर्ययसाधितचञ्चच्छिरोरुहा भान्ति ॥२४॥
यत्र क्वापि सभायां नासावंशस्थितोपनेत्राश्च ।
प्रविशन्त्यशङ्कमगणितपरपुरुषाङ्गप्रघट्टनं प्रायः ॥२५॥
क्वापि च पुरुषैः प्रणयात् प्रदत्तहस्तावलम्बनाः कामम् ।
विष्वक् परिभ्रमन्ति प्रवातसेवनकृते नित्यम् ॥२६॥
काश्चिद् द्विचक्रयानं सोत्प्लुत्यवरोहणं समारुह्य ।
कन्दलयन्त्यवलिप्ता गतिलीलास्वत्र वैचित्र्यम् ॥२७॥
काश्चित्साकं पुरुषैः सहार्धमासनमधिष्ठिता रात्रौ ।
चित्रपटीयाऽभिनयान् निर्भयमेता निरीक्षन्ते ॥२८॥
क्वापि च नित्यं पुरुषैरर्धाविर्भवदुरःस्थलाभोगाः ।
आरचयन्ति सलीलं कन्दुककेलिं विलासिन्यः ॥२९॥

क्वापि सभासु स्त्रीणां स्वतन्त्रतायाः समर्थकान् विषयान् ।
पुंभिः समानताञ्च व्याचक्षाणा विलोक्यन्ते ॥३०॥
एवं नवसंस्कृतिका वैधव्यस्याप्यलं विभेदिन्यः ।
अवनमयन्ति मुखानि स्वैरिण्यो वारवनितानाम् ॥३१॥
दीक्षां समश्नुतां तत् परदाराऽनीक्षणेऽत्र ते चक्षुः ।
वाक्षु च पक्ष्मलय त्वं रसधारां माधुरीञ्चापि ॥३२॥
नापादिता हि शुद्धि सन्दिग्धाक्षरलिपिस्त्वयाद्यापि ।
अस्पष्टा तव लेखनरीतिर्व्यर्थयति मनोऽत्यर्थम् ॥३३॥
माभिद्रुहोऽत्र कञ्चन मेर्ष्यीः सब्रह्मचारिणे क्वापि ।
मा वा क्रुधश्च कस्मैचित् कञ्चिद्वापि मा द्विक्षः ॥३४॥
त्वं खलु मात्मन एवाविष्कुरु कुत्रापि बुद्धिवैशिष्ट्यम् ।
आगतजनवक्तव्यश्रवणेपि त्वं मनो दध्याः ॥३५॥
परिहर परपरिवादं स्मर हरिमखिलावकाशकालेषु ।
त्यज विषमिव परवस्तु भ्रमणं मा कुरु तमस्विन्याम् ॥३६॥
पूज्यतमास्ते गुरवो विद्वत्सम्माननीयवैदुष्याः ।
तान्नित्यं निर्मायं शुश्रूषस्वानतो भक्त्या ॥३७॥
स्मर गुरुवरसेवातः श्रीकृष्णोऽपि द्रुतं समध्यैष्ट ।
छन्दांस्ययातयामान्यन्या विद्याः कलाश्चेति ॥३८॥
न च नैतत्ते विदितं यद्गुरुकृपयैव केवलं लेभे ।
आरुणिरनधीयानोप्यखिला विद्या विनायासम् ॥३९॥
शुद्धाचरणैश्चेतोवृत्याकलनानुवर्तनैर्नित्यम् ।
अनुसन्धानैस्तद्गृहकार्यादिष्वपि यथाकालम् ॥४०॥
निरुपधि शुश्रूषाभिर्नित्यं पादाभिवादनैर्भक्त्या ।
पठितग्रन्थस्मृत्यभ्यसनैः सन्ततमुपस्थितिभिः ॥४१॥
साध्यां परामनन्यां गुरुवर्य्याणां कृपां सदाऽक्षय्याम् ।
त्वं खलु समधिजिगांसुर्यत्नात् सम्पादय प्रीत्या ॥४२॥
ते तव गुरवः कामं शास्त्राकूपारपारदृश्वानः ।
तत् सप्रश्रयमेतेऽस्माभिश्चापि प्रणम्यन्ते ॥४३॥
सोल्लुण्ठनं निरस्तं ग्रस्तं वाक्यञ्च निष्ठुरञ्चापि ।
कुत्रापि न भाषेथा मा तुद कस्यापि वा चित्तम् ॥४४॥
जिज्ञासामह आयुष्मत्सर्वाङ्गीणभद्रसंयोगम् ।
वयमिह सर्वे भगवत्कृपयाऽऽनन्देन नन्दामः ॥४५॥

कोष्णकबन्धाप्लावप्रबन्धसम्पादने समुद्युंक्ष्व ।
यावच्छक्यं शीतात् त्रायस्व त्वं निजात्मानम् ॥४६॥
त्वं खलु शयनादर्वागर्धप्रस्थोन्मितं पयो नक्तम् ।
उपयुंक्ष्वाभ्यवहरणादनन्तरं वत्स नियमेन ॥४७॥
सकृदप्यवगाहेथाः प्रतिमासं विष्णुपद्याञ्चेत् ।
सान्तस्तलं पविष्यस्यात्मानं चाप्स्यसि श्रेयः ॥४८॥
दृष्ट्वा पत्रं तेऽस्मच्चेतोऽत्यर्थं प्रमोदमायाति ।
सत्यवकाशे तस्मात् पत्रं वत्स प्रहेतव्यम् ॥४९॥
अवकरनिकरनिरासे जाते हर्म्ये सुधाभिरुद्दीप्ते ।
पद्यान्येत न्येवं घटितान्यद्यैव लिखितानि ॥५०॥

भूयस्तेऽयं दीर्घमायुः प्रशस्तं
वैदुष्यञ्च प्रौढमाशंसमानः ।
तातः पूताः सर्वथा श्रेयसे तें
सत्या माङ्गल्याशिषः सम्प्रयुङ्क्ते ॥५१॥

—रामप्रताप शास्त्री

# श्लोकानुक्रमणिका

R 891.2169,JOS-T
D4142

## OTHER OF BOOKS INTERST

| | | | |
|---|---|---|---|
| 1. | **De Mora, J.M.** | :The Principle of Opposites in Sanskrit Texts | Rs. 75.00 |
| 2. | **Joshi, R.V.** | :The Sri Kranakarnamrta of Lilasuka (Hindi) | Rs. 50.00 |
| 3. | **Joshi, G.D.** | :The Sri Bhramara-Gita (Hindi) | Rs. 20.00 |
| 4. | **Joshi, R.V.** | :The Sarasvata (Sanskrit Kavya with Hindi Translation) | Rs. 35.00 |
| 5. | **Joshi, R.V.** | :The Sri Lakamisahasra of Vankatadhvarin (Hindi) | Rs. 125.00 |
| 6. | **Sukhwal, R.** | :The Philosophy of Vallabha (Hindi) | Rs. 65.00 |
| 7. | **Vivakananda, S.** | :Raja Yoga or Conquring The Internal Nature | Rs. 95.00 |
| 8. | **Miri, M.** | :What is A Person | Rs. 65.00 |
| 9. | **Bharali, S.** | :Tragic Outlook In Assamese Drama | Rs. 45.00 |
| 10. | **Sizer, N. & Drayton, H.S.** | :A Manual of Phrenology And Physiognomy (Heads and Faces) How to Study Them | Rs.200.00 |
| 11. | **Joshi, R.V.** | :The Kalpalata (Hindi) | Rs. 60.00 |
| 12. | **Joshi, R.V.** | :The Sri Rasapancadhyayi (Sanskrti ka Adhyayana) | Rs. 80.00 |